Thanjavur Sarasvati Mahal Series No. 319.

# Paramahamsa Carya

OF

## SADASIVA BRAHMENDRA

# ॥ परमहंसचर्या ॥

॥ श्री सदाशिवब्रह्मेन्द्रविरचिता ॥




**DIRECTOR,**

**SARASVATI MAHAL LIBRARY, THANJAVUR.**

1991 ] Price Rs. 60-00

Thanjavur Sarasvati Mahal - Series No. 319.

# Paramahamsa Carya

OF

## SADASIVA BRAHMENDRA



*Edited with Introduction in Sanskrit and Tamil*

*By*

P. M. PADMANABHA SARMA Siromani.
Vedanta Visarada & Hindi Praveen Pracharak,
Retd. Sanskrit Pandit,
Sarasvati Mahal Library, Thanjavur.







*Published by*

**DIRECTOR,**
**SARASVATI MAHAL LIBRARY, THANJAVUR.**



1991 ] Price Rs. 60--00

# BIBLIOGRAPHICAL DATA


| | | |
|---|---|---|
| Title of the Book | ... | Paramahamsa Carya |
| Editor | ... | P. M. Padmanabha Sarma |
| Publisher | ... | M. Sadasivam, Director, Sarasvati Mahal Library |
| Publication No. | ... | 319 |
| Language | ... | Sanskrit |
| Edition | ... | I Edition |
| Date of Publication | ... | April, 1991 |
| Paper used | ... | 14·2 Kg. Seshasayee |
| Size of the Book | ... | 21 × 14 cm. |
| Printing Type used | ... | 16 pt. |
| Number of pages | ... | 380 |
| No. of copies | ... | 500 |
| Price | ... | Rs. 60/- (Rupees Sixty only) |
| Printer | ... | Sarasvati Mahal Library Press |
| Binding | ... | Half Calico |
| Subject | ... | Philosophy |

तञ्जपुरी सरस्वतीमहाल् ग्रन्थमालायाः पुष्पम् - २१०

# ॥ परमहंसचर्या ॥

## ॥ श्री सदाशिवब्रह्मेन्द्रविरचिता ॥



सरस्वतीमहालयभूतपूर्वपण्डितेन,
वेदान्तविशारद, वेदान्तशिरोमणि, हिन्दीप्रवीणप्रचारक विरुदभाजा
**पु. म. पद्मनाभशर्मणा**
संशोध्य, संस्कृतद्राविडीभाषाप्रस्तावनासहितं परिष्कृत्य,
सम्पादिता




प्रकाशकः

**निर्देशकः**

सरस्वतीमहाल् ग्रन्थालयः तञ्जपुरी ॥



१९९१ ]

[ रू. ६०—००.

# PUBLISHER'S PREFACE

The present publication 'PARAMA HAMSA CHARYA' contains spiritual principles and duties of 'PARAMAHAMSA' (SANYASIN).

The author of the text 'Sri Sadasiva Brahmendra Sarasvati' was a born 'JEEVANMUKTA'. He was a scholar in all Sastras, particularly in Yoga Darsan. Being a Yogi - a Sage, a Seer, a Preceptor, above all a JEEVAN MUKTA he created many literary works for the welfare of the mankind. However he observed Mouna Vrata throughout his life, but he had communicated his noble thoughts to the public through his numerous literary works.

This present work whieh is published for the first time is a treasure of Principles of Advaita Philosophy. The introduction in Tamil and Sanskrit given by the learned editor clearly reveals the life history of the author and his other works. This work named 'Parama Hamsa Charya' is precisely describing the qualities of Yathi, Bhikshu, Brahma - Nistha and Parama Hamsa with reference to the various SRUTIS, SMRTHIS, ITHIHASAS, and PURANAS and this clearly shows the vast knowledge and real state of wisdom of the author. It is certain that the Principles described in this text may help every individual who wants liberation from worldly affairs.

The editor Sri P. M. Padmanabha Sarma, a Retired Sanskrit Pandit of Sarasvati Mahal Library is an experienced Sanskrit Scholar, particularly in Advaita Vedanta (Philosophy). He has brought out many Sanskrit manuscripts during his service here. He has taken much pain and keen interest in editing this rare manuscript in an appreciable manner by giving detailed introduction in Tamil and Sanskrit.

Our thanks are due to him for his sincere efforts in bringing out this rare manuscript.

Our congratulations are due to the workers of our Sarasvati Mahal Printing unit for their neat printing.

Our thanks are due to the Government of India for their generous grant for this publication.

**M. SADASIVAM,**
*Director,*
T. M. S. S. M. Library.

Thanjavur,
9 5 - 1991.



॥ श्री ॥

# ॥ प्रस्तावना ॥

❖❖❖❖

ब्रह्म ज्ञानमयं सदाशिवमयं ह्यैच्छद्ध्रुवं स्वामिति
तज्जीवो भवसागरे निपतितानुद्धर्तुकामो जनान् ।
धृत्वा रूपमिदं सदाशिव इति ख्यातिं च लब्ध्वा स्वयं
कृत्वा ग्रन्थशतं भवाब्धितरणं पूर्णोऽभवत्तं नुमः ॥ -१

वेदमूर्धकमूर्धन्यसारसङ्ग्रहकोविदः ।
स्मृत्यब्धिलोडने दक्षः बुधः तत्सारसञ्चये ॥ -२

पुराणोपपुराणादिवार्द्धिमन्थनमन्दरः ।
सर्वोपनिषद्दुष्टज्ञानविज्ञानकेतनम् ॥ -३

सदाशिव इति ख्यातो ब्रह्मेन्द्रो ब्रह्मभावुकः ।
अज्ञानतिमिरान्धानामस्माकं भाग्यसञ्चयः ॥ -४

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
वक्ति परमहंसानां चर्यामार्यजनेडिताम् ॥ -५

संशोध्य तालपत्रात्तां परिष्कृत्य यथामति ।
प्रथयिष्यामि सर्वेषां विदुषां तोषवृद्धये ॥ -६

अयि भोः वेदान्तविज्ञानसुनिश्चितार्थाः ! विद्वच्छिरोमणयः !! तत्रभवतां भवतां करकमलयोः परमहंसपरिव्राजकानां सदाशिवाख्यब्रह्मेन्द्राणां कृतिः परमहंसचर्या नामार्यजनेडिता इदम्प्रथमतया सगर्वं प्रकाशिता उपहारीक्रियते ।

"सदाशिवं नमस्कृत्यामुत्र प्रारभ्यते मया"

विदितमेवेदं अद्वैतविद्याटवीमञ्चरमाणपञ्चास्यानां विद्वच्चूडामणीनां, यदिह मरुमरीचिकानीरसमानोदरे अनर्थपरम्परामेदुरे अपारे संसारसागरेऽपारे मज्जं मज्जमुन्मज्जतां जननमरणरूपक्षारपानमपि अमृतपानमिव मन्यमानानां निवृत्तिसाधने उपेक्षावतामपि निर्वृतावपेक्षावतां प्रेक्षावतां मोक्ष एक एव परमपुरुषार्थतयाऽभीष्ट इति ।

स च मोक्षः संसारनिवृत्तिरूपः अद्वैतब्रह्मतत्त्वसाक्षात्कारात् परब्रह्मात्मनाऽवस्थानमेवेति वेदान्तिनां राद्धान्तः । निवृत्तिश्च संसारस्य, अद्वैतब्रह्मतत्त्वसाक्षात्काररूपेण ज्ञानेनैव सम्भवति । तथा च कथ्यन्ते - मोक्षस्य त्रीणि साधनानि, कर्म, उपासना, ज्ञानं चेति । ज्ञानं तावत्साक्षाद्धेतुः, तदितरे परम्परयेति सिद्धान्तः । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिः "बुद्धौ शरणमन्विच्छ कृपणाः फलहेतव" इति स्मृतिश्च प्रमाणे भवतः ।

कर्मोपासनयोस्तु ज्ञानहेतुत्वात्परम्परया मोक्षसाधनत्वमङ्गीक्रियते । तदेव प्रतिपादयन्ति ता एव श्रुतयः – "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति ।

तच्च ज्ञानं यथास्वरूपमेव वस्तुस्वरूपं निरूपयति । वस्तुनि निरूपिते, सद्य एवाज्ञाननिवृत्त्या तन्मूलकसंसारनिवृत्तिः, ब्रह्मीभावश्च सिद्ध्यत इति ज्ञानस्य साक्षात्फलदातृत्वमपि समञ्जसमेव ।

"अमृतत्वस्य तु नाशास्ति वित्तेने" ति मोक्षं प्रति कर्मणः साधनत्वं नास्तीति निराकृत्य, "येनाहं नामृता स्यां किमहं तेन कुर्यां, यदेव भगवान् वेत्थ तदेव मे ब्रूही" ति मैत्रेय्या कृते प्रश्ने, "आत्मा वा अरे द्रष्टव्य" इति आत्मसाक्षात्कारं मोक्षसाधनमभिधाय, तादृशात्मसाक्षात्कारसाधनविधानाय प्रवृत्ता श्रुतिः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति त्रिभिर्वाक्यैः, क्रमात श्रवणं, मननं, निदिध्यासनमिति त्रीणि साधनानि विदधाति ।

एवं चात्मसाक्षात्कार एव मोक्ष इत्यत्र न कापि संगीतिः । स आत्मसाक्षात्कारोऽपि विद्ययैव सम्पत्स्यत इति अहो विद्याया-महत्त्वमप्रतिहतमेव । "सा विद्याऽमृता सतामि" ति हि वदन्ति । तादृशीं ब्रह्मविद्यां प्रतिपादयन्त्युपनिषदः । उपनिषच्छब्दार्थप्रतिपादनं नोच्यतेऽत्र भाष्यादिषु स्पष्टमिति । ता उपनिषद, उपोद्बलयन्ति भगवद्गीता ब्रह्मसूत्राणि च । अत एव प्रातस्स्मरणीया महानुभावाः श्रीभगवत्पादाः तेषां भाष्यादिकं कृत्वा परमोपकारमकुर्वन् । तादृशोपनिषत्प्रतिपादितब्रह्मविद्याधिगमे अधिकारिणः के वेति प्रश्नस्य समाधानं दातुमिव ग्रन्थमिमं प्रणिनायास्माकं ग्रन्थकारः सदाशिव-ब्रह्मेन्द्रः ।

## "कदा कुत्र कथं चासीद्ग्रन्थकर्तेति कथ्यते"

विदितपूर्वमिदं भारतेतिहाससमीक्षावतां समेषां विदुषां, यद्द्राविडदेशे विद्यमानतिरुच्चितञ्जावूरमण्डलान्तर्गतज्यापरिमितः कावेरीवेण्णारुप्रभृतिभिः प्रशस्ताभिर्नदीभिः परिवृतः नदीमातृकः शस्यश्यामलः भूप्रदेश एव पुरा "चोलदेश" इति प्रसिद्ध्या प्रास्ताप्यत । तस्य च राजधानी नगरीललामभूता तञ्जापुरी नाम नगरी । तामधिष्ठाय, चोलभुवमिमां, पूर्वं चोलभूपाः, पश्चात् *1585—1673* पर्यन्ते काले नायकवंशीया भूनायकाः, तदनन्तरं *1676—1855* पर्यन्ते काले भोसलकुलजन्या अजन्या महाराष्ट्रीयराजन्याश्च पालयामासुः । नगर्यामस्यां साम्प्रतमपि चोलराजप्रतिष्ठापिताशिवालयाः, नायकनिर्मितं महद्राजभवनं, महाराष्ट्रीयसंस्थापितं सरस्वतीमहालयाभिख्यं मातृकागारं, एवमन्यान्यानि बहुविधानि चिह्नानि विराजन्तेतमाम् ।

## "महाराष्ट्रीयराजानां को राजा तिलकायते"

तादृशभोसलकुलजन्यराजन्येषु *1684—1710* पर्यन्ते काले शाहजीमहाराजः दाक्षिणात्यभोज इव व्यराजत । एकोजिमहाराजस्य दीपाम्बागर्भसम्भूतोऽयं शाहजिः जन्मना कविः, पण्डितः, सङ्गीतसाहित्यकलाधुरीणः, बहुभाषाभाषी नित्यप्रबन्धकर्ता चासीत् । "शाहजीपुरं" "एकोजिपुरं" "दीपाम्बापुरमि"ति ग्रामान्निर्माय, षड्दर्शिनीपारङ्गतान्पण्डितानावासयामास । कनकाभिषेकादिभिस्तान् मानयामास । धनादिसाहाय्येन तान्निश्चिन्तान्कारयामास ।

एवं चोलदेशे यत्र यत्र कवेरजा प्रवहति स्म तत्र तत्र ग्रामेषु नगरेषु सर्वत्रापि च काव्यनाटकेतिहासपुराणादीनां चर्चा, वेदवेदाङ्गानामध्ययनं, न्यायवैशेषिकमीमांसावेदान्तादीनां प्रचारः, तत्तच्छास्त्रेषु ललितललितानां ग्रन्थानां निर्माणमित्येवं तत्रत्यानां पण्डितानां समयः व्यतिचक्राम ।

तस्मिन्राज्ञि सुशासति, कावेरीप्रभावप्रभावितेषु शस्यश्यामलेषु भूप्रदेशेषु न केवलं धान्यमुप्तं, परन्तु विद्यार्थिनां मानसक्षेत्रेषु साहितीबीजमप्युप्तम् । न केवलं शस्याङ्कुराः प्ररोपिताः, अपितु शास्त्राङ्कुरा अपि । न केवलं धान्यजातमासादितं, किन्तु वेदवेदान्तजातमपि । न केवलं रसालकदल्यादिफलमधिगतं, परन्तु वेदान्तविचारलब्धमोक्षफलमपि । किं बहुना, तदानीं चोलभूस्स्वर्णभूरभूत् ।

## "तत्काले कवयः के वा यतयो व्यलसन्भुवि"

तस्य च राज्ञस्समये श्रीरामभद्रदीक्षितः, रामनाथमखी, नरहरिदीक्षितः, श्रीधरवेङ्कटेशदीक्षितः, पेरियप्पादीक्षितः, यज्ञेश्वरदीक्षितः, एवमादयः परश्शताः पण्डिताः भुवमिमां विद्यामातृकामकुर्वन् । किञ्च, परमशिवेन्द्रः, सदाशिवब्रह्मेन्द्रः, श्रीकृष्णानन्दसरस्वती, श्रीरामानन्दसरस्वती, चिदम्बरब्रह्म इत्येवमादयः परस्सहस्राः परमहंसपरिव्राजकाचार्याः तत्र तत्र वेदवेदान्तप्रचारेण भुवमिमां मोक्षपुरीमेव चक्रुः ।

"सदाशिवाख्ययतीन्द्रः ग्रन्थकारः प्रकीर्त्यते ।
प्रस्तूयते च चरितं तस्य मङ्गलदायकम्" ॥

अस्ति हि तञ्जावूर्मण्डलान्तर्गतः पूर्वप्रतिपादितमहामहिमवता शाहजीभूपालेन पण्डितसात्कृतः, शाहजीपुरमिति पूर्वं कृतनामधेयोऽपि अधुना "तिरुविशलूरि" ति ख्यातिमुपगतः कश्चन ग्रामः । स-चाकृत्याल्पोऽपि निखिलकलानिधानत्वाद्विश्वविद्यालय इव व्यराजत । तत्र पदवाक्यप्रमाणपारावारपारीणाः पण्डितप्रकाण्डा अलमकुर्वन् । अतश्च देशाद्देशं, ग्रामाद्ग्रामं चाटित्वा सङ्ख्यातीता विद्यार्थिगणाः साहितीकलामध्येतुं, पश्यत्पादीयपाणिनीयपातञ्जलकापिलोभयमीमांसादि-कानि शास्त्राण्यधिगन्तुं च समागता आसन् ।

तेषु कण्डमाणिक्यग्रामवास्तव्यः रामभद्रदीक्षितः, आन्ध्रदेशादागतः श्रीधरवेङ्कटेशदीक्षितः, करूर्नगरवासी सदाशिवः, तञ्जावूर्नगरपरिसर-ग्रामादागतः गोपालकृष्णशास्त्री च प्रख्यायन्ते प्रधानतमाः । अत-एव ब्रह्मचारिणाप्येते सब्रह्मचारिणोऽभूवन् । अध्ययनानन्तरं अवभृथ-परिपूता एते कथमागच्छन्निति कृते विमर्शे महदाश्चर्यं समुदेति ।

कौण्डिन्यकुलमण्डनं यज्ञरामदीक्षितसुपुत्रः रामभद्रदीक्षितः श्रीनीलकण्ठदीक्षितात्साहितीं, श्रीचोक्कनाथमखिनः तत्सुतामिव पातञ्जलीं, श्रीकृष्णानन्दसरस्वतीभ्यः ब्रह्मविद्यामप्यधीत्य, रामभक्ताग्रणीः जानकी-परिणयादिनाटककर्ता, रामबाणस्तवचापस्तवादिप्रबन्धकर्ता, आचार्यत्वेन

स्वाचार्यकार्तज्ञ्यनिवेदकः, "प्रत्यग्रपतञ्जलि" रिति विद्वज्जनैः प्रस्तूयमानश्चासीत् ।

लिङ्गार्यसूनुः श्रीधरवेङ्कटेशदीक्षितोऽपि रामभद्रदीक्षितसमानस्कन्ध एव भूत्वा परमेश्वरभक्ताग्रेसरः आख्याषष्टिशाहेन्द्रविलासादिप्रबन्धकर्ता, योगीन्द्र इव जनानां मोक्षस्य नामसङ्कीर्तनोपायमार्गमपि दर्शयन्, गृहकूपे गङ्गाविर्भावादिविभूतिमधिगच्छन्, "अय्यावालि" ति प्रख्यातिमलभत ।

गोपालकृष्णशास्त्री विद्यया विनयेन च पूर्वोक्तौ द्वावप्यतिरिच्य पदवाक्यप्रमाणपारीणः पातञ्जलमहाभाष्यदीपिकां प्रणिनाय । रामभद्रवेङ्कटेशदीक्षितौ यथा वा भोंसलकुलजन्येन शाहजीमहाराजेन सम्मान्य सभास्तारौ कृतौ, तथैवायं गोपालकृष्णशास्त्री, नवमालपुर्यां (पुदुक्कोट्टै) सिंहासनमधिरूढेन तोण्डमान्कुलमण्डनेन महाराजेन सम्मानितः सभास्तारश्च कृतोऽभूत् ।

अस्माकं ग्रन्थकारः सदाशिवेन्द्रस्तु सर्वास्वपि कलासु प्रावीण्यमुपगतः, षड्दर्शिनीपारङ्गतः, विशेषतश्च पातञ्जले योगशास्त्रेऽनुभवपूर्वकं ज्ञानमप्यविन्दत । "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति रीत्या गृहस्थाश्रमस्थोऽयं सदाशिवः, स्वपत्न्याः पुष्पवतीमहोत्सवावसरे भोक्षनलाभे विलम्बभसमर्जनीति मनसा सन्यस्तः बहिर्निरगच्छत् । तत्र तत्र पर्यटन्, स्वपाण्डित्येन विदुषस्सर्वानप्यानर्जयामास । स्वयोगशक्त्या पामरानपि जनानाश्चर्यमग्नान् कारयामास । एवं स्वपाण्डित्येन चरित्रेण च आपामरपण्डितं सर्वानप्यात्मसादकरोत् ।

तत्काले परमहंसपरिव्राजकाचार्या जगद्गुरवः श्रीपरशिवेन्द्र-सरस्वतीश्रीचरणा' कामकोटिपीठमलमकुर्वन् । सदाशिवोऽयं तत्पादारविन्दपरिचर्यालब्धात्मविद्यः तदन्तेवासी भवन् शमदमादिसाधनचतुष्टय-सम्पन्नो भूत्वा सततध्यातब्रह्मीभावश्चाभूत् । क्रमेण परशिवेन्द्र-सरस्वतीनामनुग्रहेण सदाशिवोऽयं अनवरतापरोक्षब्रह्मानुभूतिविलसितः, स्थितप्रज्ञः ब्रह्मेन्द्रो भूत्वा स्वशरीराद्यभिमानमपहाय जडवत् अन्धवत् बधिरवत् सञ्चरन्, योगशक्त्या अणिमाद्यष्टसिद्धिसम्पन्नोऽपि तदनित्यत्वं वीक्षमाणः, सच्चिदानन्दसागरे निमग्नः नित्यतृप्तः निरुपमः नित्यानन्द-प्रसन्नोऽदृश्यत ।

स्वाचार्यस्य श्रीपरशिवेन्द्रस्योपदेशाद्विजितविद्वज्जनजन्याहङ्कारमपि सन्यस्य मौनमजत । कस्मिंश्चित्केदारे उच्चभूमिमुपधानीकृत्य स्वपन्नयं, "पामराः पश्यन्ति" ति तत्सुखं च परितत्याज । एवं तत्र तत्र संसारसागरमग्नाञ्जनान् उद्धर्तुकामः स्वपादस्पर्शेन भुवमिमां पवित्रीकुर्वन्नयं, केषांचिद्रोगान्, केषांचिज्ज्वररोगांश्च निवारयन्, राजाधिराजानामपि सम्मानमपमानमिव मन्वानः, तथापि तेषां राज्ञामनुग्रहपूर्वकमभिलाषान् सत्यापयन् परिचचार । पुदुक्कोट्टै तोण्डमान्महाराजः कावेरीसिकतासु लिखितानि ब्रह्मेन्द्रानुग्रहपूर्वकाक्षराणि सङ्ग्रहीकृत्य वरीवस्यां करोतीति श्रूयते । भोंसलकुलतिलकायमानस्य शाहजीमहाराजस्यावरजः प्रथम-शरभोजिमहाराजः स्वप्रेषितपरिजनमुखेन ब्रह्मेन्द्रदत्तं आत्मविद्या-विलासाख्यं ग्रन्थरत्नं सरस्वतीमहालये ग्रन्थागारे ररक्षेति दृश्यते । प्रमाणद्वयमेतत् पूर्वोक्तं विषयं द्रढयति ।

एवं बालानां मध्ये बाल इव, संख्यावतां पुरतः पण्डित इव, वृद्धानां पुरस्तात्परमहंस इव, पामराणां मध्ये उन्मत्त इव, परमहंसानां पुरतः अधिगतापरोक्षज्ञान इव वीक्ष्यते स्म । किं बहुना, परमहंसपरिव्राजकाचार्याः कामकोटिपीठाधिपतयः जगद्गुरवः श्रीपरशिवेन्द्रसरस्वत्यः, तथैव परमहंसपरिव्राजकाचार्याः शृङ्गगिरिशारदापीठाधिपतयः जगद्गुरवः श्रीनृसिंहभारत्यः एवमन्येऽन्ये च परमहंसाः सदाशिवब्रह्मेन्द्रस्य महिमानं मुक्तकण्ठं तुष्टुवुः ।

उन्मत्तवत्सञ्चरतीह शिष्यः
तवेति लोकस्य वचांसि शृण्वन् ।
खिद्यन्नुवाचास्य गुरुः पुराऽहो
"ह्युन्मत्तता मे न हि तादृशीति" ॥

पुरा यवनकर्तनस्रवदमन्दरक्तोऽपि यः
पुनः पदसरोरुहप्रणतमेनमेनोनिधिम् ।
कृपापरवशः पदं पतनवर्जितं प्रापयन्
सदाशिवयतीट् स मय्यनवधिं कृपां सिञ्चतु ॥

इति च प्रमाणे भवतः । तञ्जावूरुपरिसरविराजमान "मारियम्मन्नालयः" महामायापरिप्लुष्टान् जनानुद्धर्तुमनेनैव निर्मापित इति श्रूयते । अत एवाद्यापि तदालयस्थस्तम्भे ब्रह्मेन्द्रस्य प्रतिकृतिरेका दरीदृश्यते । एवं करतलभिक्षस्तरुतलवासः ब्रह्मेन्द्रोऽयं परेषां दृष्ट्या मत्त इव, जड इव, मूक इव, बधिर इव परिदृश्यमानोऽपि स्वयं, "रसो वै सः,

रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्युक्तरीत्या परमानन्दरसमनुभवन् सदा प्रसन्नवदनः, लगुडैस्ताड्यमानोऽपि, छिन्नहस्तोऽपि अखिद्यमानः, अणोरप्यणुः, महतोऽपि महान्, लघोरपि लघुः, गुरोरपि गुरुः, अप्राप्तस्थलेऽपि प्राप्यमानः, अवाप्तकामः, आपामरान्पण्डितान्तान् जनान् वशीकुर्वन् तत्र तत्र पर्यचरत् । जनानां परमोपकाराय संसारसागरतारकान्बहून् ग्रन्थान्विरचयामास ।

अन्ततः जीवभावमापन्नस्य स्वस्य कर्तव्यं सर्वमपि कृतमिति मत्वेव, नेरूरग्राममगच्छत् । पूर्वमेव ब्रह्मेन्द्रेण निवेदितवृत्तान्तानां सर्वेषां महाजनानां समक्षमेव मिथुनमासीयज्येष्ठशुक्लदशम्यां प्रारब्धकर्मपरिणतं पाञ्चभौतिकं शरीरमुत्सृज्य ब्रह्मीबभूव । महदिदमाश्चर्यं, यत्त्रिषु स्थलेषु भिन्नभिन्नेषु, महाजनैः परिदृश्यमानः ब्रह्मीभूय व्यराजतेति श्रूयते । ब्रह्मेन्द्रस्य ब्रह्मीभूतत्वात्, ब्रह्मणश्च सर्वव्यापकत्वात् किं वा भवितुं न शक्यत इति प्रोच्य विरमामि । अघटितघटनापटीयसी तस्य लीलेति शम् ।

**"सदाशिवस्य ग्रन्थाः के लभ्यन्ते कति वा भुवि"**

"पद्यं हि लोके सुलभेन गृह्यते" इति रीत्या पद्यरूपेणैव तान्वदामः ।

**सदाशिवाख्यब्रह्मेन्द्रः, "ब्रह्मतत्त्वप्रकाशिकाम्"[1] ।**

**"सिद्धान्तकल्पवल्लीं"[2] च केसराख्यसमाख्यया ॥**

यस्यां च सर्वे सिद्धान्ताः सानेन प्रतिपादिताः ।

चकार "योगसूत्राणां वृत्तिं,"[3] "स्वप्नोदितं"[4] तथा ॥

"आत्मविद्याविलासं"[5] च "स्वानुभूतिप्रकाशिकाम्"[6] ।

"आत्मानश्चानुसन्धानं"[7] "गुरुरत्नैकमालिकाम्"[8] ॥

मणीनां "नवानां मालां"[9] "कीर्तनानि बहूनि"[10] च ।

चक्रे "परमहंसानां चर्या"[11] मार्यजनेडिताम् ॥

ग्रन्थकर्त्रानेन उपनिषदामपि विवृतिः कृतेति श्रुतपूर्वोऽयं विषयः न दृष्टचर इति नैव प्रस्तावितमत्र ।

"ग्रन्थस्यास्य च निर्माणे को भवेत्कर्तुराशयः"

पूर्वमेव प्रतिपादितमस्माभिः यत्प्रेक्षावतां समेषामपि मोक्षः एक एवाभीष्ट इति । तन्मोक्षप्राप्तिं येऽभिलषन्ति त एवास्मिन् ग्रन्थे प्रतिपादितां चर्यामनुष्ठातुमधिकारिणो भवन्तीति न पृथक्तया वक्तव्यतामपेक्षते । भाष्योक्तरीत्या तैस्साधनचतुष्टयसम्पन्नैर्भाव्यम् । तथा चास्य ग्रन्थस्यानुबन्धचतुष्टयमेवं वक्तुं शक्यते —

अधिकारी परहंसः तच्चर्या विषयो मतः ।

धर्मधर्मिसुसम्बन्धः मुक्तिरेव प्रयोजनमिति ॥

के ते परमहंसाः इति विवक्षायां, ग्रन्थकार एव बहुविधै-रुद्धरणैः प्रतिपादयति स्पष्टतया । परमहंसचर्या तावद्यमनियमभेदेन द्विविधा भवति । यमाश्च, पातञ्जलप्रोक्तरीत्या, अहिंसा, सत्यमस्तेयं ब्रह्मचर्यमपरिग्रह इत्येव । नियमास्तु शौचं, सन्तोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानमित्युच्यन्ते । अनयोरनुष्ठानवैलक्षण्यं च स्मर्यत एव, यथा, "यमान्सेवेत सततं न नित्यं नियमान्बुधः । यमान्पतत्यकुर्वाणः, नियमान्केवलान्भजन्नि" ति । ग्रन्थकारोऽत्र एव विवृणोति - यमवान्नियमेष्वसक्तः नावसीदेत् । नियमवान्यमेष्वसक्तः पतत्येव । अतः यमबहुलेष्वनुसन्दधीत बुद्धिम । अत एव सर्वत्र श्रुतिस्मृतीतिहासपुराणोपपुराणादिषु यमशब्दाभिधेया प्रतिषिद्धवर्जनरूपैव परमहंसचर्या बहुलमुपलभ्यत" इति । अतः यमस्य प्राधान्यम-प्रतिहतमेव ।

यः कुटुम्बं पुत्रदारांश्च, यज्ञं यज्ञोपवीतं च परित्यज्य, एकवासाः करतलभिक्षस्तरुतलवासः, ज्ञानदण्डं स्वीकृत्य चरति स एव परमहंस इति अभिधीयते । सः ग्रामे एकरात्रं, नगरे पञ्चरात्रं, वार्षिकान् चतुरो मासान् ग्रामे नगरे वा वसेत् । सः एक एक चरेन्न द्वाभ्यां त्रिभिर्वा । एकाकी सः मनोवक्कायकर्मभिः ब्रह्मैव चिन्तये "दहं ब्रह्मास्मी" ति । सः मञ्चकं, शुक्लवस्त्रं, स्त्रीकथां, लौल्यं, दिवास्वापं, यानमिति पतनकारणानि इमानि सर्वाण्यपि परित्यजेत् । सदायं निर्ममो निरहङ्कारः, निरपेक्षः, निराशिषः, भूत्वा विविक्तदेश-संसक्तो भवेत् । आत्मचिन्तकोऽयं दूरयात्रां वर्जयेत् । "चर्मखण्ड

द्विधा भिन्नं अपानोद्गारधूपितम् । ये रमन्ते नमस्तेभ्यः, साहसं किमतः परम्" मिति गीत्या वैराग्यमनुभवेत् । सः न सन्तं, न चासन्तं, नाश्रुतं, न बहुश्रुतं, न सुवृत्तं, न दुर्वृत्तं विदन् चरेत् । परमहंसोऽयं पाणिपात्रं चरेत् असकृद्भैक्षं नाचरेत् । अनिन्द्यं गेहं व्रजेत्, निन्द्यं च परिवर्जयेत् । एवं यो रागद्वेषवियुक्तात्मा, समलोष्टाश्मकाञ्चनः, प्राणिहिंसानिवृत्तः, सर्वनिस्स्पृहो वर्तेत स एव मुनिरित्युच्यते । परमहंसोऽपि मुनिवद्वर्तेत । किं बहुना, नृसिंह-तापनीयोपनिषद्घोषयति "तेऽभ्युत्थाय ईषणात्रयेभ्यः ससाधनेभ्यः, निरागारा निष्परिग्रहा अशिखा, अयज्ञोपवीताः .... शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतयः ... आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तः, तत्रैव परिसमाप्ता" इति । "तत्रैव परिसमाप्ता" इत्यस्यार्थं ग्रन्थकारः वदति निर्विशेषत्वादि-लक्षणे परस्मिन्ब्रह्मण्येवात्मभावमापन्ना इति ।

इत्यादिकं विषयं बहुविधाभ्यस्स्मृतिभ्यः नानाविधेभ्यः पुराणोप-पुराणेभ्यश्च महता प्रयत्नेन समुचितान्युद्धरणानि उद्धृत्य द्रढीकुर्वन्ति पुनः पुनः ग्रन्थकारा इति संक्षेपः । पठतामस्माकं महदिदं आश्चर्यं समुदेति, स्थितप्रज्ञस्य तत्र तत्र सञ्चरमाणस्यास्य ग्रन्थकारस्य एतादृश-विषयसङ्ग्रहे कदा समयोऽलभ्यत इति । नात्र पुनरुक्तिशङ्का करणीया, यतोऽस्य विषयस्य प्राधान्याद्दुरुहत्वाच्च । इत्थं ग्रन्थ-कर्तुरुद्देश्यः प्रशंसनीयः परमानन्दप्रदश्चेति शिवम् ।

पूर्वोक्तविषयस्यैव सङ्ग्रहः क्रियते मया ।
व्युत्पित्सूनां प्रबोधाय व्युत्पन्नस्मरणाय च ॥

तत्तदाश्रमभेदेन वेदोक्तानां च कर्मणाम् ।
विना तत्तत्फलापेक्षां कृतानां तत्फलं भवेत् ॥

त्रिगुणं चञ्चलं चित्तं निर्बन्धं वासनामयम् ।
तया तन्निर्मलं भूयात्सद्वृत्या सात्त्विकाख्यया ॥

धर्मार्थकाममोक्षाणां त्रय एव विनाशिनः ।
तुरीयस्तु सदा श्रेष्ठः श्रेयस्कर इतीर्यते ॥

नित्यानित्यात्मकः लोकः वस्तुभिः परिपूरितः ।
नित्यस्य वस्तुनो ज्ञाने मोक्षप्राप्तिर्भविष्यति ॥

इन्द्रियेषु च सर्वेषु ज्ञानकर्माख्यनामसु ।
निग्रहेण शमो दान्तिस्तितिक्षा जायते ध्रुवम् ॥

ब्रह्म सत्यं जगन्मिथ्या मायया भासते जगत् ।
इति ज्ञानेन सहसा जगदेतद्विनश्यति ॥

जीवात्मा परमात्मेति व्यवहारेण भिद्यते ।
तत्त्वतो द्वयमेवैकं तद्दर्शनमथेप्सितम् ॥

श्रवणं मननं ध्यानं बहिरङ्गं दर्शनस्य तु ।
आत्मदर्शनमात्रेण जगदेतद्विलीयते ॥

वेदान्तास्सर्व एवैते घोषयन्ति सडिण्डिमम् ।
ब्रह्मैव सत्यं न जगदेतच्छ्रवणमुच्यते ॥

आत्मा च भासते नित्यं कथं ब्रह्म भविष्यति ।
युक्तिभिर्वैदिकाभिश्च चिन्तनं मननं विदुः ॥

सजातीयविचारैश्च विजातीयान्निवर्त्य च ।
ब्रह्मण्यद्वैतभावे च चिन्तनं ध्यानमेव हि ॥

ब्रह्माऽद्वैतं सदा भाति सच्चिदानन्दविग्रहम् ।
आसेचनकमेवेदं नित्यं निरुपमं मतम् ॥

इत्थंभूतेन ज्ञानेन ह्यज्ञानं विनिवर्तते ।
तन्निवृत्या, भवस्यापि निवृत्या, जायते "रसः" ॥

## "मातृकाणां विवरणम्"

विदितमेवेदं समेषां संख्यावतां, यत्तञ्जपुरीयमरस्वतीमहालयः भोंसलकुलजन्येन राजन्यमूर्धन्येन श्रीशरभोजीमहाराजेन स्थापितः पोषितः वर्धितश्च विलसतितरामिति । तत्र परमहंसचर्यानामाङ्किताः ग्रन्थलिपिविन्यस्ताः *9535, 9536, 9856, 9857, 9858* इत्येवं संख्या-निर्दिष्टाः पञ्चमातृका दरीदृश्यन्ते । परन्तु परिशीलने कृते सति, पञ्चमातृका भिन्नभिन्नबन्धा अपि समानस्कन्धा एव दृश्यन्तेतमाम् । कस्याञ्चिन्मातृकायां कस्मिंश्चित्स्थले संशयः कश्चित् स्याच्चेत् स मातृकान्तरेण विनिवारितोऽभवदिति सोदर्य इव समाना एव, न

विप्रतिपन्ना इति पाठभेदस्य नावकाशोऽस्ति, तथापि B.*9856* / D.*7616* सङ्ख्याङ्किता मातृका प्रधानतया स्वीकृता तदितरास्सर्वा अपि परित्यक्ता इति निवेदयामः ।

## कार्तज्ञ्यस्य निवेदनम् ।

ग्रन्थस्यास्य परिष्कृत्य सम्पादने मामर्हं इति नियुज्य महद्गौरवं दत्तवद्भ्यः ग्रन्थालयस्यास्य निर्देशकेभ्यः श्रु. सदाशिवं, M A., M.Litt., महाशयेभ्यः सश्रद्धं कार्तज्ञ्यं निवेदयामः । ग्रन्थमिमं निर्दोषं सुन्दरं च मुद्राप्य महान्तमुपकारं कृतवद्भ्यः मुद्राक्षरशालाकर्मचारिभ्यः सप्रेम कृतज्ञतां निवेदयामः । अन्ततो गत्वा सभक्त्युन्मेषं निवेदयामो वयं, यदिमं ग्रन्थं,

"भारत्या वा सरस्वत्याः नैव भेदः कदाचन ।
समर्पयामि पादेभ्यः तत्तत्पीठगयोस्तयोः ॥
प्रेमस्पृशा ननु दृशा परिशीलयन्तु ॥ इति ।

इत्थं विद्वद्विधेयः
भूतपूर्वसरस्वतीमहालयपण्डितः
P. M. पद्मनाभशर्मा.

तंजावूर्.
*10—4—91.*



# முகவுரை

**

ரசிகப்பெருமக்களே ! ஆன்மீகத்துறையில் ஆர்வமுள்ள அறிஞர்களே !!

வணக்கம். வழக்கம்போல் தற்சமயம் தஞ்சை சரஸ்வதி மகால் நூல்நிலையம், சதாசிவப்பிரும்மேந்தரின் "பரமஹம்ச சர்யா" என்ற பெயரைத்தாங்கிய அரிய நூலை பாரதந்திலேயே முதல்முதலாக வெளியிட்டு தங்கள் தாமரைக் கைகளில் சமர்ப்பிக்கின்றது.

## நூலாசிரியர் காலம்

தற்சமயமுள்ள தஞ்சை, திருச்சி மாவட்டங்களின் நிலப்பரப்பை ஒன்றாக்கிய பாகம், "சோழ தேசம்" என்ற சிறப்புப் பெயரால் பண்டைய காலத்தில் பாராட்டப்பட்டதுண்டு. காவேரி, வெண்ணாறு முதலிய ஜீவநதிகள், இப்பிரதேசத்தை வளமாக்கி, "சோழநாடு சோறுடைத்து" என்ற நற்பெயரையும் சூட்டின. இதை ஆண்ட சோழ மன்னர்களும், 1585 — 1673 வரை ஆண்ட நாயக்க மன்னர்களும், 1676 — 1855 வரை ஆண்ட மராட்டிய மன்னர்களும், இந்நாட்டை சோறுடைத்ததோடு அல்லாமல் பேறு படைத்ததாகவும் செய்தனர். அக்காலத்தில் இது பொன்னாடு என்று போற்றப்பட்டதுண்டு. இந்நாட்டில் பொன்னி செல்வதால் நீர்வளம் ஏற்பட்டது. இதை ஆண்ட மன்னர்கள் கல்வி வளத்தையும் உண்டாக்கினர். செல்வம் குவிந்தது. மக்கள் அமைதியாகவும், பண்புடனும் வாழ்ந்து வத்தனர். ஆகவே, சோழதேசம் தாயைப்போல அன்னத்தையும், கல்வியையும் அளித்து வந்தது. இதன் புகழ் அக்காலத்திய மன்னர்களையே சாரும்.

இந்த சோழ தேசத்திற்கு தஞ்சையே தலைநகரமாக விளங்கியது. இங்கு சோழ மன்னர்களின் கலைக்கோவில்களும், நாயக்க மன்னர்களின் அரண்மனைகளும், மராட்டிய மன்னர்களின் நூலகங்களும் இன்றும் அவர்களின் புகழைப் பாடுகின்றன. இத்தகைய சிறப்புவாய்ந்த தஞ்சையை 1684 — 1710 வரை "ஷாஜி" என்ற மராட்டிய மன்னன் ஆண்டுவந்தான். அவன் பிறவியிலேயே கவிஞன். பன்மொழிப் புலவன், சங்கீத சாகித்யங்களில் கரைகண்டவன். அக்காலத்திய புலவர்கள் "அபிநவபோஜன்" என்று அவனை சிறப்புப்பெயரால் போற்றுவதுண்டு. திருவாரூரில் வீற்றிருக்கும் தியாகேசன் பெயரில் பலராகங்களில் தாளக் கட்டுடன் அவன் எழுதிய பாடல்கள் நூற்றுக்கணக்கானவைப் பிரசுரிக்கப்படாமையால் அவன் பெருமை குடவிளக்குபோல் சிறப்புடன் வெளிவரவில்லை. தற்சமயம் சரஸ்வதி மகால் நூலகம் அவைகளை வெளிக்கொண்டுவர முயற்சிப்பதன்மூலம் நாளை அவன் புகழ் குன்றின் விளக்காக வெளிவரலாம். அவை வெளிவருமானால் "சங்கீத மும்மூர்த்திகள்" என்று போற்றப்படும் நம் முன்னோர்களும் ஷாஜி மன்னன் காட்டிய வழியிலேயே சென்றுள்ளார்கள் என்று சொல்லப்படும் காலம் வரும்.

அத்தகைய சிறப்புவாய்ந்த ஷாஜி மன்னன் "கற்றாரைக் கற்றாரே காமுறுவர்" என்றபடி ஷாஜிபுரம், ஏகோஜிபுரம், தீபாம்பாபுரம் என்ற கிராமங்களை நிர்மாணித்து, அவைகளில் அறிவிற்சிறந்த புலவர்களை அமர்த்தினான். அவர்களுக்கு கனகாபிஷேகம்செய்து மகிழ்வித்தான். வடமொழியிலும், தென்மொழியிலும் பல நூல்களை இயற்றும்படி அவர்களை வேண்டிக்கொண்டான். அவர்களுக்குப் பொருள் உதவியும் செய்தான். தானும் பல நூல்களை இயற்றி அவர்களுக்கு வழிகாட்டினான். அக்காலத்தில் இயற்றப்பட்ட நூல்கள் கணக்கிலடங்கா.

அந்த பேரரசன் காலத்தில் பொன்னியின் ஜலம் புரண்டோடியதுபோல் அதன் கரைகளிலும் கல்வி பெருகி

யோடியது. ராமபத்ரதீக்ஷிதர், ராமனாதமகி, பெரியப்பா தீக்ஷிதர், நரஹரிதீக்ஷிதர், ஸ்ரீதரஅய்யாவாள் என்ற வெங்கடேசதீக்ஷிதர் இம்மாதிரியான கணக்கற்ற புலவர்கள் இந்நாட்டை கல்விவளம் பொருந்தியதாக ஆக்கினர். மற்றொருபுறம் ஸ்ரீபரமசிவேந்திரர், கிருஷ்ணானந்தசரஸ்வதி, ராமானந்த சரஸ்வதி, சதாசிவபிருமேந்திரர், சிதம்பர பிருமேந்திரர் போன்ற மகானுபாவர்கள் ஆன்மீகத் துறையில் நாட்டம்கொண்டவர்களாய்த் துறவியாகி மக்களுக்கு ஆன்மிக நெறியுடன் நற்பண்புகளையும் உண்மையான மக்களாகத்திகழ வழிகாட்டினர்.

## நூலாசிரியர் வரலாறு.

இவ்வாறு சிறப்புமிகுந்த ஷாஜி மன்னனால் வித்வான்களுக்கு மகாதானமாக அளிக்கப்பட்ட ஷாஜிபுரம் என்ற திருவிசைநல்லூரில் மாபெரும் வித்வான்கள் வசித்துவந்தபடியால் பல ஊர்களுலிருந்து பல மாணவர்கள் சாத்திரங்களைக் கற்க அங்கு வருவது வழக்கமாயிற்று. அவர்களில் முக்கியமாக நால்வரைப்பற்றிக் குறிப்பிடுகிறோம்.

கண்டரமாணிக்கம் என்ற கிராமத்திலிருந்து வந்த ஸ்ரீராமபத்ரதீக்ஷிதரும், கரூரிலிருந்து வந்த சதாசிவேந்திரரும், ஆந்திரத்திலிருந்து வந்த ஸ்ரீதரவெங்கடேசதீக்ஷிதரும், தஞ்சை மாவட்டத்திலிருந்து வந்த கோபாலகிருஷ்ண சாஸ்திரிகளும் முக்கியமானவர்கள். இந்நால்வரும் சக மாணவர்களாகப் படித்து எதிர்காலத்தில் எவ்வாறு மாபெரும் வித்வான்களாகி புகழ்பெற்றனர் என்பதைத் தனித்தனியாக விவரிக்கிறோம்.

ராமபத்ரதீக்ஷிதர் கௌண்டில்ய கோத்திரத்திலுதித்தவர். யக்ஞராமதீக்ஷிதரின் மகன். சொக்கநாதமகியிடம் வியாகரணம் பயின்று அவருக்கு மாப்பிள்ளையாகத் திகழ்ந்தவர். நீலகண்டதீக்ஷிதரிடம் இலக்கியங்களைப்பயின்று சிறந்த ராமபக்தரானார். ஸ்ரீகிருஷ்ணானந்தசரஸ்வதியிட

மிருந்து வேதாந்தம் பயின்று, சாத்திரங்களில் கரை கண்டவர். இவர் ஜானகிபரிணயம் என்ற நாடகத்துடன் ராமபாணஸ்தவம், ராமசாபஸ்தவம் முதலிய இலக்கியங்களையும் படைத்துள்ளார். ஆசார்யஸ்தவம் என்ற நூலை எழுதி தன் வேதாந்தாசிரியர் ஸ்ரீ கிருஷ்ணானந்தசரஸ்வதிக்கு அஞ்ஜலி சமர்ப்பித்துள்ளார். அக்காலத்திய பண்டிதர்கள் இவரை "பிரத்யக்ஷபதஞ்ஜலி" என்று அழைத்துப் பாராட்டியுள்ளார்கள். ஷாஜி மன்னன் இவரைத் தன் அவைத்தலைவராக நியமித்துள்ளான்.

ஸ்ரீ நரவெங்கடேசதீக்ஷிதர் லிங்கார்யரின் பிள்ளை தாய்மொழி தெலுங்கு. இவரும் ராமபத்ரதீக்ஷிதருக்குச் சமமான யோக்யதை உடையவர். தர்க்கம், வேதாந்தம் இரண்டும் இவருக்கு கைவந்த கலைகளாகும். சிவபக்தர். அக்காலப்பண்டிதர்கள் இவரை "அய்யாவாள்" என்று அன்புடனும், மரியாதையுடனும் அழைப்பதுண்டு. இவர் ஆக்யாஷஷ்டி, சாகேந்திரவிலாசம் முதலிய நூல்களை எழுதியுள்ளார். நாமசங்கீர்த்தன வழிபாட்டைப் பின் பற்றுபவர் இவர். அக்காலத்தில் ஸ்ரீகாஞ்சி காமகோடி பீடாதிபதிகளான கோவிந்தபுரம் ஸ்ரீபோதேந்திரஸ்வாமிகள் இவ்வழிபாட்டை ஸ்தாபித்தவர். சிவ என்ற பொருளைவிட சொல்லிற்கு முக்கியத்துவமளித்து அதைச் சொல்வதன்மூலம் பக்தி, ஞானமடைந்து அதன்மூலம் மோக்ஷமடைய வழிகாட்டுவதே நாமசங்கீர்த்தன வழிபாட்டின் உயர்ந்த லக்ஷ்யமாம். அதைப்பின்பற்றி, எல்லோரிடமும் அன்பாகப்பழகி, எல்லோர் மரியாதைக்கும் பாத்திரமானவர். ஒருசமயம் சிரார்த்தத்திற்குச்செய்த சமயலை ஓர் பசியுள்ள ஹரிஜனுக்கு அளித்துவிட்டு, தன்வீட்டின் கிணற்றில் தன் கவிதைகளால் கங்கையை வரவழைத்து, ஸ்நானம்செய்து, பிறகு பரிசுத்தமாகச் சிரார்த்தம்செய்து காண்பித்தவர். இன்றும் கார்த்திகை அமாவாசையன்று இவ்விழா திருவிசைநல்லூரில் நடக்கிறது. அன்று ஆயிரக் கணக்கான மக்கள் அக்கிணற்று ஜலத்தில் நீராடிப் புனித

மாகிறார்கள். இவரையும் ஷாஜி மன்னன் தன் அவைத் தலைவனாக ஏற்றான்.

கோபாலகிருஷ்ண சாஸ்திரியார் தஞ்சை மண்டலத்தில் பிறந்து மேற்கூறிய பெரியோர்களுடன் திருவிசைநல்லூரில் பல சாத்திரங்களைக் கற்றவர். விசேஷமாக, வியாகரணத்தில் பாண்டித்யம் பெற்றவர். வேதாந்தத்திலும் கரைகண்டவர். இலக்கணத்தில் பதஞ்ஜலி பாஷ்யத்திற்கு உரை எழுதியுள்ளார். இவருடைய புலமையை நம் நூலாசிரியர் சதாசிவபிரும்மமே பாராட்டியுள்ளரர் என்றால் வேறு அத்தாக்ஷி வேண்டுமோ. இவருடைய புலமையைப் பாராட்டி, புதுக்கோட்டைத் தொண்டமான் குலத்திலுதித்த ஓர் அரசன் தன் அவைத் தலைவராக ஏற்றுக் கொண்டான்.

நாம் வெளியிடும் நூலாசிரியர் சதாசிவம் கரூரிலிருந்து சாத்திரங்கள் பயில திருவிசைநல்லூருக்கு வந்த ஓர் அந்தணச்சிறுவன் படிப்பில் முன்புசொன்ன பெரியோர்களைவிட சிறப்பான முறையில் படித்து எல்லா வேத சாத்திரங்கள், புராண, இதிகாசங்கள் முதலியவைகளில் நல்ல தேர்ச்சி அடைந்தார். விசேஷமாக பதஞ்ஜலி எழுதிய யோக சூத்திரங்களைப் படித்து, அவைகளை அனுபவமுறையிலும் கொண்டுவர பயிற்சிபெற்றார். தாய் தந்தையர்களின் நிர்பந்தத்தால் கல்யாணம் செய்துகொண்டாரேதவிர இல்லறத்தில் அவருக்கு நாட்டமில்லை.

ஒரு சமயம் தன் மனைவி புஷ்பவதியானாள் என்ற செய்தியைக்கேட்டு, பெற்றோர்கள் சந்தோஷமாகக் கொண்டாட, இவர் சாப்பாட்டிற்கு நேரமாகிவிட்டது என்ற சாக்கில் வீட்டைவிட்டு வெளியேறிவிட்டார். பல இடங்களுக்குச் சென்று தன் புலமையையும் யோக சக்தியையும் காண்பித்து எல்லோரையும் வியக்கச்செய்தார்.

இவர் காலத்தில் ஸ்ரீகாஞ்சி காமகோடி பீடாதிபதி யாக இருந்தவர் ஸ்ரீபரமசிவேந்திர சரஸ்வதியாவார். அவரை அணுகி சதாசிவம் அவரிடம் வேதாந்தம் பயின்றார். ஸ்ரீபரமசிவேந்திரரும் இவருடைய மேதாவிலாசம், யோகத் தில் ஆர்வம், உலகில் பற்றற்றநிலை முதலியவைகளைக் கண்டு அனுக்ரஹத்துடன் ஞானத்தையும் புகட்டினார். இயற்கையிலேயே ஞானியான நம் சதாசிவத்திற்கு இது ஒரு வரப்பிரசாதமாக அமைந்துவிட்டது. சுவாமிகளைத் தரிசிக்கவரும் பண்டிதர்களிடம் பல கேள்விகளைக்கேட்டு அவர்களைத் திணறடிப்பார். அதனால் வருத்தமுற்ற அப்பண்டிதர்கள் சுவாமிகளிடம் குறையாகச் சொல்லவே சுவாமிகள் சதாசிவத்தைக் கண்டிக்கும் முறையில், “உன் வாய் எப்பொழுது அடைபடப்போகிறது” என்று சொல்லவே சதாசிவம் அன்றிலிருந்து மௌனியானார்.

கடைசிவரையில் அவர் எவரிடமும் பேசுவதேயில்லை. கேட்டால் எழுதிக் காண்பிப்பார். சிறந்த ஞானியான சதாசிவர் எப்பொழுதும் யோகத்திலேயே ஆழ்ந்தவராய், பலநாட்கள் அன்ன ஆகாரமின்றிகூட இருந்திருக்கிறார். வரப்பில் தலையை வைத்துக்கொண்டு வயலில் படுத்துக் கொண்டிருந்த இந்த பிரும்மம் “எல்லாம் துறந்தவருக்குத் தலையணிவேண்டியுள்ளதோ ?” என்று வேலை செய்யும் பெண்கள் பரிகசித்தனர் என்பதற்காக, அந்த சுகத்தையும் அன்றிலிருந்து விட்டுவிட்டார். பசி வரும்பொழுது யார் வீட்டிலாகியும் கையேந்தி நிற்பார். எதைக் கொடுத்தா லும் உண்டு சென்றுவிடுவார். ஒருவன் வேடிக்கையாக அசுத்த வஸ்துவை அளிக்க அதையும் உண்டுவிட்டார். அவன் மன்னிப்புக்கேட்க, அதையும் லட்சியம் செய்யாமல் சென்றுவிட்டார். சில சமயம் ஆடையில்லாமலும் சென்ற துண்டு. ஒரு வேறு மதத்தினன் அவர் கையில் கத்தியால் குத்த, இரத்தம் பெருகியும் அதை அலக்ஷ்யம்செய்து சென்று விட்டார்.

இம்மாதிரியான செய்கைகளைச் சிலர் கண்டு, பரமசிவேந்திரரிடம் சென்று, "உங்கள் சீடன் பைத்தியமாகத் திரிகிறான்" என்று சொல்லவே, சுவாமிகள் எனக்கு அந்த பைத்தியம் பிடிக்கவில்லையே என்று ஏங்கினாராம். இவ்வாறு மாயை நீங்கியபடியால், அதன் விளைவாக உலகத்தையே காணாது எங்கும் வியாபித்த பரம்பொருளையே கண்டு களித்துக்கொண்டிருந்தார் நம் சதாசிவர். இந்த மகான் ஞானத்துடன் யோகசித்தியையும் உடையவராய் அணிமாதி அஷ்ட சித்திகளையும் கையாள்வார். இல்லாத பொருளை இருப்பது போலவும், இருக்கும் பொருளை இல்லாதுபோலவும் காண்பிப்பதுஉண்டு. சிதம்பரத்தில் இருப்பவனை மதுரையிலும், அங்கிருப்பவனை சிதம்பரத்திலும் காண்பித்து ஆச்சரியத்தில் ஆழ்த்துவதும் உண்டு. ஒருசமயம் சிலபையன்களை, அவர்கள் விரும்பினார்கள் என்பதால் மதுரைக்குச்சென்று, மீனாக்ஷி தரிசனம்செய்து விட்டு ஒரு வினாடியில் திரும்பி அழைத்து வந்ததுமுண்டு.

இவ்வாறு பையன்களிடம் பையன்போலவும், பெரியோர்களிடம் ஞானிபோலவும், பாமர மக்களிடம் பயித்தியம் போலவும் தோன்றுவார். இம்மகானை அரசர்கள் தங்கள் இல்லத்திற்கு அழைத்ததுண்டு. அழைக்கும் பொழுது செல்லமாட்டார். அழைக்காத பொழுது திடீரெனத் தோன்றுவார். புதுக்கோட்டை மன்னன் பிள்ளைப் பேறு உண்டாக இவரை வேண்டினான். இவர் என்ன செய்யவேண்டுமென்று காவிரி மணலில் எழுதிக் காண்பித்தார். அம்மன்னன் அந்த மணலை அள்ளி, தங்கப் பேழையில் வைத்து பூஜித்து வந்தான். இன்றும் அரண்மனையில் பரம்பரை மன்னர்கள் அச்சடங்கைச் செய்து வருகிறார்கள். தஞ்சை ஷாஜி மன்னனின் தம்பி முதலாம் சரபோஜி மாயூரத்திலுள்ள பிரும்மத்தைப் பார்த்துவர ஒருவரை அனுப்பிவைத்தான். அவர், அங்கிருந்தபடியே அருளி, தன் நூலான ஆத்மவித்யாவிலாசத்தை அனுப்பி

யிருந்தார். இந்த நூல் நான் குறிப்பிட்ட குறிப்புடன் சரஸ்வதி மகால் நூலகத்தில் உள்ளது. தந்தை மக்கள் அம்மையால் பீடிக்கப்பட்டபொழுது, ஸ்ரீமாரியம்மன் கோவிலைக் கட்டச்செய்து அவர்களின் பிணியை நீக்கினார். அக்கோவிலின் தூணில் பிரும்மத்தின் வடிவம் வடிக்கப் பட்டுள்ளது. இவ்வாறு பல மக்களைப் பல பிணிகளிலி ருந்து விடுபடச்செய்து, சம்சாரப்பிணியிலிருந்தும் விடுபட பலநூல்களை இவர் இயற்றியுள்ளார். இதன் விவரம் தனியாகக் கீழே தருகிறோம்.

இவ்வாறு பலவினோதங்களைச் செய்து காண்பித்த சதாசிவ பிரும்மம் நெடூர் என்ற ஊருக்குச்சென்று, அங்குள்ள மக்களிடம் தான் சமாதி அடையப்போவதைச் சொல்லிவிட்டு அவ்வாறே பிரும்மமானார் என்று சொல் கிறார்கள். வெவ்வேறான மூன்று ஊர்களில் அவ்வூர் மக்கள் எதிரில் சமாதி அடைந்தார் என்பதால் சமாதி யிலும் மக்களை வியப்பில் ஆழ்த்தினார் என்பது குறிப் பிடத்தக்கது. ஆனிமாதம் சுக்லபக்ஷம் தசமி அவர் சமாதி அடைந்த திருநாளாகும். அன்று முதல் மூன்று ஊர்களில் அவருடைய சமாதிபூஜை முதலியவை இன்றும் நடந்து வருகின்றன. சிருங்ககிரி சாரதாபீடாதிபதி ஸ்ரீநரஸிம்ம பாரதி அவர்களும், காஞ்சி காமகோடி பீடாதிபதி ஸ்ரீபரமசிவேந்திர சரஸ்வதி அவர்களும் மற்றும் பலரும் சதாசிவ பிரும்மத்தைப் பாராட்டிப் பல சுலோகங்கள் எழுதியிருப்பதிலிருந்து இவர் ஓர் மகான் என்பதில் ஐய முண்டோ? வாழ்க பிரும்மம்! வாழ்க ஆன்மீகம்!

## நூலாசிரியர் எழுதிய நூல்களின் விபரம்.

1. பிரும்மதத்வப்ரகாசிகா, 2. யோக சூத்ரவிருத்தி, 3. நவமணிமாலை, 4. ஆத்மானுபூதிப்ரகாசிகை, 5. ஆத்ம வித்யாவிலாசம், 6. ஸ்வப்னோதிதம், 7. ஆத்மானு சந்தானம், 8. சித்தாந்தகல்பவல்லி, 9. குருரத்னமாலிகை,

10. பலகீர்த்தனங்கள், 11. பரமஹம்ஸசர்யா, 12. உபநிஷத்துக்களின்விவிருதி மேற்கூறிய நூல்களில் பல வெளியிடப்பட்டுள்ளன. இதுவரை வெளிவராத பரமஹம்ஸசர்யா என்ற நூலை பெருமிதத்துடன் வெளியிடுகிறோம்.

## நூலாசிரியரின் நோக்கம்

பொதுவாக மனிதன் சிந்தனைசெய்யும் சக்திபடைத்த ஓர் அறிவுஜீவி. ஆறறிவு படைத்த அவன் ஓர் நிமிடம் கூட வீணாக உட்கார்ந்திருக்கமுடியாது. மிருகங்களைப் போல உணவு, உறக்கம் மாத்திரம் அவன் வேலையல்ல. ஆகவே, அவன் மனம் உலகத்தின்பால் செல்கிறது. நாம் யார்? எங்கிருந்தோம்? எங்கு செல்வோம்? எங்கு சென்றால் நிரந்தரமான இன்பம் அடையலாம்? என்று சிந்தனை அவன் மனதில் உதயமாவது இயல்பு. இதற்கு அடிப்படையான ஆதாரங்களைத் தேடுகிறான். நம் முன்னோர்களான முனிவர்கள் என்ன கூறுகின்றனர்? அவைகளில் எது அதிகமாக ஆராய்ந்து கண்டுபிடிக்கப் பட்டது? அதன் ஆதாரங்கள் எதனால் பிரமாணமாகும் இவ்வாறு ஆராய்ந்து கடைசியில் ஒன்றைத் தீர்மானித்து அவ்வழி செல்வதே சிறந்த வழி என்று தீர்மானிக்கிறான். இவைகளின் முடிவுகளைத்தான் தர்சனங்கள் அல்லது சாத்திரங்கள் என்று கூறலாம்.

தர்சனங்களில் சில மொழியின் சொல், பொருள் இவைகளை ஆராய்கின்றன. இவைகளை வியாகரணம் அல்லது இலக்கணம் என்போம். சில, உலகத்தின் பொருள்கள், பூதங்கள், பௌதிகங்கள் இவைகளை அலசுகின்றன. இவைகளைத் தர்க்கம் அல்லது நியாயம் என்போம். சில, வேதங்களில் கூறப்பட்ட பொருள்களையும், கர்மாக்களையும் ஆராய்கின்றன. இவைகளை மீமாம்சை என்போம். சில, வேதங்களின் முடிவில் உள்ள உபநிடதங்களையும்,

அதன் அடிப்படையில் வந்த பிரும்ம சூத்திரங்கள், பகவத் கீதை முதலியவைகளையும் ஆராய்கின்றன. இவைகளை ஆன்மீகத்துறையில் செய்த ஆராய்ச்சி என்றும் வேதாந்தம் என்றும் பகர்வோம். சில, இவைகளையே அடிப்படையாகக்கொண்டு யோகம், சாங்கியம் என்ற வேறுபட்ட மார்க்கங்களை வகுக்கின்றன. இவைகளை சாங்கிய மென்றும், யோகம் என்றும் கூறுவோம். ஆக இவ்வாறு ஆறு தர்சனங்களும் வெவ்வேறு வகையில் ஆராய்ந்து மனிதனுடைய சிந்தனாச்சக்தியைத் தூண்டிவிடுவதால் ஆராய்ச்சி நூல்கள் என்று சுருங்கக் கூறலாம். ஆக வியாகரணம், தர்க்கம், மீமாம்சை, வேதாந்தம், சாங்கியம், யோகம் என்ற ஆறு தரிசனங்களும் உலகத்தையும், வேதத்தையும் அடிப்படையாகக்கொண்டு ஆராயப்பட்ட நூல்களாகும். இவைகளைப் பற்பல நூற்றாண்டுகளுக்கு முன்பாகவே பாணிநி, ஜைமினி, வியாசர், கௌதமர், கபிலர், பதஞ்ஜலி முதலிய மகான்கள் ஈடுபட்டு, தங்கள் தங்கள் கொள்கைகளைத் தக்கச் சான்றுகளுடன் வெளியிட்டுள்ளனர். இதன்மூலம், உலகில் நாகரீகம் என்று ஒன்று தோன்றுவதற்குப் பல நூற்றாண்டுகளுக்கு முன்பே நம் நாகரீகம் எவ்வளவு சிறந்ததாக இருந்தது என்பதை அறியமுடிகிறது. அத்துடன் நம் தர்சனங்கள், வழியால் மாறுபட்டிருப்பினும் ஆன்மீகத் தத்துவத்தை உறுதியாக நிலைநாட்டுவதில் எவ்வளவு முனைப்பாக இருந்தன என்பதும் புலனாகிறது. என்ன நம் முன்னோர்களின் தீர்க்க தரிசனம்! இவைகளை அழியாது பாதுகாக்கவேண்டியது நம்தலையாய கடமை என்பதைச் சொல்லவும் வேண்டுமோ. அப்பேர்ப்பட்ட ஆறு தரிசனங்களில் ஒன்றுதான் உத்திர மீமாம்சை அல்லது வேதாந்தம் என்பது. இது உபநிடதங்களின் சாரத்தை, நம் பாரத கலாசாரத்தின் உயிர்நாடியை விவரிக்கிறது. மனிதன் தான் என்று நினைக்கும் ஜீவாத்மா, கடவுள் என்று கருதும் பரமாத்மா, தன் கண் முன்னால் தோன்றும் இவ்வுலகம் இம்மூன்றிற்கும் உள்ள சம்பந்தத்தை ஆராய்ந்தால் கடவுள்தான் இவ்வுலகமாக மாறியுள்ளான். ஆகவே, உலகமே கடவுள். அந்த உலகத்தை உலகமாகப்

பார்ப்பது பொய்ஞானம். கடவுளாகப் பார்ப்பதே மெய் ஞானம். கடைசியில் பார்ப்பவனும் பார்க்கப்படுவதும் இரண்டும் ஒன்றே என்ற நிலையில் பேரின்பம் கிடைக் கிறது. அப்பொழுதுதான் ஓர்குலம், ஓர்தேவன் என்ற ஞானம் உண்டாகிறது. இதை உண்டுபண்ணுவதுதான் உபநிடதங்களின் கருத்து. உப. நி. ஷதங்கள் என்ற சொல்லிற்கே ஜீவாத்மாவை பரமாத்மாவினிடம் அழைத்துச்செல்வது, அவனுடைய அறியாமையை நீக்கு வது, அதனால் ஏற்படும் பிறவியை அகற்றுவது, அதனால் பேரின்பத்தை அடைவிப்பது என்பவை பொருள்களாகும். அதற்கு ஏற்றத் தகுதிபடைத்தவர்கள் யார்? என்ற கேள்விகளுக்குப் பதில் அளிப்பதே இந்நூல். நடுத்தர அதிகாரிகளுக்கு பக்தியே சாதனம். இவைகளை உபநிட தங்கள், ஸ்மிருதிகள், புராணங்கள், உபபுராணங்கள் இவை களின் வாயிலாக விளக்கிவிட்டு பாரதம், பாகவதம், விஷ்ணு புராணம், சூதசம்ஹிதை, மானவபுராணம் முதலியவை களின் சுருக்கத்தையும் இந்நூலாசிரியர் நமக்குத் தருகிறார். ஆங்காங்கு நமக்குப் புரியாத இடங்களில் விளக்கம் தரு கிறார். இவ்வாறு ஞானியாக ஆங்காங்குச் சென்று ஏனைய மானிடர்களைக் கடைத்தேற்ற அலைந்த இவருக்கு இவ்வளவு பெரிய நூலை அளிக்கும் வாய்ப்பு கிடைத்த தென்றால் நம்போன்ற மானிடர்களிடம் ஏற்பட்ட கரு ணையே காரணம் என்பதை விளக்கிவிட்டு. அப்பேர்ப்பட்ட கருணை வள்ளல் ஞானி சதாசிவபிரும்மேந்திரரை என்றும் போற்றுவோம் என்று வணங்கிவிட்டு என் முகவுரையை நிறுத்திக்கொள்கிறேன்.

## சுவடிகளின் விளக்கம்.

"பரமஹம்ஸ சர்யா" என்ற நூலை விவரிக்கும் ஓலைச் சுவடிகள் எங்கள் நூலகத்தில் ஐந்து கட்டுகள் உள்ளன. அவைகளின் பதிவு எண்கள் 9535, 9536, 9856, 9857, 9858 என்பன, இவை கிரந்த லிபியில் எழுதப் பட்டவை. இவை எண்ணால் பிரிக்கப்பட்டிருப்பினும்

விஷயத்தால் ஒன்றுபட்டவையே. ஓர் சுவடியில் ஓரிடத்தில் சந்தேகம் வந்தால் அதை மற்றொன்றைக்கொண்டு திருத்தி விடலாம். இவ்வாறு ஒன்று மற்றொன்றை சோதரிபோல பின்பற்றுகிறது என்பதால் பாடபேதம் ஏற்பட வாய்ப்பில்லை. ஆகவே B 9836 / D 7616 எண் உள்ள சுவடியை முக்கியமாகக் கருதி இந்நூல் தயாரிக்கப்பட்டது.

## நன்றி நவிலல்

இந்நூலகத்திலிருந்து ஓய்வுபெற்ற என்னை, இந்நூலைப் பதிப்பிப்பதற்குத் தகுதியுள்ளவன் எனக்கருதி இப்பணியைச் செய்ய ஆணையிட்ட, நூலக இயக்குநர் திரு. மு. சதாசிவம், M. A.. M. Litt., அவர்களுக்கு எனது உளங்கனிந்த நன்றியைத் தெரிவித்துக்கொள்கிறேன். இந்நூலை பிழை இல்லாது அழகிய முறையில் அச்சிட்டுத் தந்த அச்சகப் பணியாளர்களுக்கு என் நன்றி உரித்தாகுக. இந்நூலாசிரியர் இரண்டு பீடாதிபதிகளின் சம்பந்தம் உள்ளவராயிருப்பதால், இந்நூலை ஸ்ரீகாஞ்சி காமகோடி பீடாதிபதிகள், ஸ்ரீசிருங்கேரி சாரதா பீடாதிபதிகள், இவர்களின் பாத மலர்களில் பக்தியுடன் சமர்ப்பிக்கிறேன்.

வணக்கம்.

பு. ம. பத்மநாப சர்மா,
முன்னாள் வடமொழிப் பண்டிதர்,
சரஸ்வதி மஹால், தஞ்சை.

தஞ்சை,
4—4—'91.



॥ श्रीः ॥

# ॥ विषयसूचिका ॥

**श्रुतिस्मृतिपुराणादिषु परमहंसचर्या कथं प्रतिपादितेति वदन् ग्रन्थकारः, कुतस्त्यानि उद्धरणानि उद्धरति ?**

*********

| क्रम संख्या | | | पृष्ट संख्या |
|---|---|---|---|

## स्मृतिषु

## इतिहासपुराणागमाभियुक्तानि वचनानि

॥ श्रीः ॥

# ॥ परमहंसचर्या ॥*

॥ श्री सदाशिवब्रह्मेन्द्रविरचता ॥



यस्मिन्नाभाति विश्वश्रीर्मरावित्र तरङ्गिणी ।
तमानन्दघनं वन्दे भगवन्तं जगद्गुरुम् ॥
श्रुतिस्मृतिपुराणादिशास्त्रेषु प्रतिपादिताम् ।
लिखामि परहंसानां चर्यामार्यजनेडिताम् ॥

परमहंसचर्या हि यमनियमभेदेन द्विविधा । यमनियमौ चाऽऽसूत्रयत्पतञ्जलिः ।

" अहिंसा सत्याऽस्तेय ब्रह्मचर्याऽपरिग्रहा " इति यमाः । शौच-सन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमा " इति ।

तयोश्चानुष्ठानवैलक्षण्यं स्मर्यते –

यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥

---

* B. 9856, D. 7616 - T. M. S. S. M. Library, Thanjavur

पतति नियमवान्यमेष्वसक्तः, न तु यमवान् नियमाऽल-मेऽवसीदेत् इति यमनियमौ समीक्ष्य बुद्ध्या यमबहुलेष्वनुसन्दधीत बुद्धिमिति। अत एव, सर्वत्र श्रुतिस्मृतीतिहासपुराणादिषु यम-शब्दाभिधेया प्रतिषिद्धवर्जनरूपैव परमहंसचर्या बहुलमुपलभ्यते। तथाहि –

नृसिंहोत्तरतापनीयोपनिषदि—

"ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससा-धनेभ्योऽभ्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा-बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः, शान्ता-दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय: आत्मक्रीडा आत्ममिथुना-आत्मानन्दाः, प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तः, तत्रैव परि-समाप्ताः," "प्रणतमवतीति प्रणवशब्देन परं ब्रह्मैवोच्यते, तच्चाऽऽत्मप्रकाशं स्वयं प्रकाशमानं, शून्यं निर्विशेषं, जानन्तः, साक्षात्कुर्वन्तः तत्रैव निर्विशेषत्वादिलक्षणे परस्मिन्ब्रह्मण्येव परि-समाप्ताः आत्मभावमापन्ना" इत्यर्थः ॥ १ ॥

जाबालोपनिषदि—

अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति। तत्र परमहंसो नाम।

संवर्तकाऽऽरुणिश्वेतकेतुदुर्वासाऋभुनिदाघजडभरतदत्तात्रेयरैवतक-प्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचाराः अनुन्मत्ता उन्मत्तवदाचरन्तः

त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूस्वाहेत्यप्सु परित्यज्य आत्मानमन्विच्छेद्यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहः तत्त्वब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् उदरपात्रेण, लाभालाभौ समौ भूत्वा शून्यागार देवगृह तृणकूट वल्मीक वृक्षमूलकुलालशालाऽग्निहोत्रगृह-नदीपुलिन गिरिकुहर कन्दरकोटर निर्झरस्थण्डिलेषु अनिकेतवास्यप्रयत्नः निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः सन्यासेन देहत्यागं करोति स परमहंसो नामेति ॥ २ ॥

भिक्षूपनिषदि —

अथ परमहंसा नाम वृक्षमूले शून्यागारे देवगृहे वासिनः श्मशाने वा साम्बरा वा दिगम्बरा वा, न तेषां धर्माधर्मौ लाभा-लभौ, शुद्धाशुद्धद्वैतवर्जिताः सर्वसमाः सर्वात्मानः समलोष्ठाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कृत्वा सर्वत्राऽऽत्मैव पश्यन्ति ।

**सर्वत्र आत्मैव वर्तते, न ततोऽन्यदिति पश्यन्तीत्यर्थः ॥ ३ ॥**

परमहंसोपनिषदि ब्रह्मनिष्ठं प्रस्तुत्याह —

असौ स्वपुत्रमित्रकलत्रबान्धवादीन्, शिखां यज्ञोपवीतं स्वाध्यायं च सर्वकर्माणि सन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनदण्डमाच्छादनं स्वशरीरोपभोगार्थाय च लोकोपकारार्थाय च परिग्रहेत् । तच्च न मुख्योऽस्ति कोऽयं मुख्य इति । न चेदयं मुख्यो, न दण्डं, न शिखां, न यज्ञोपवीतं, नाऽऽच्छादनं चरति ।

परमहंसो न चोष्णं न सुखं न दुःखं न मानाऽपमाने च षडूर्मिवर्ज्यम् । निन्दा गर्व मत्सर दम्भदर्पेच्छाद्वेषकामक्रोधलोभ-मोह हर्षाऽसूयाऽहङ्कारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते ।

विभक्तिलिङ्गव्यत्ययेन इदं ब्रह्माण्ड, ब्रह्माण्डप्राप्तिहेतु-भूतविराडुपासनां च हित्वेत्यर्थः । स्ववपुः कुणपमिव दृश्यते पश्यति, तत्राऽहमभिमानं न करोतीत्यर्थः । तत्रैव दण्ड-त्यागमसहमानं प्रत्याह –

ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥

तितिक्षा ज्ञान वैराग्य शमादि गुणवर्जितः ।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥
स याति नरकान्घोरान् महारौरवसंज्ञितान् ॥

इदमन्तरं ज्ञात्वा स परमहंसः ।

इदं यथोक्तमन्तरं ज्ञानदण्डकाष्ठदण्डयोर्वैलक्षण्यं ज्ञात्वा ; यस्तु ज्ञानदण्डमेव धारयति स परमहंस इत्यर्थः ॥

परमहंसचर्यामेव पुनः प्रपञ्चयति –

आशाम्बरो न नमस्कारो न स्वधाकारो न निन्दा स्तुतिः यादृच्छिको भवेत् । भिक्षुर्नावाहनं न विसर्जनं न मन्त्रं न ध्यानं

नोपासनं च न लक्ष्यं नालक्ष्यं न पृथक् नापृथगहं न न त्वं च सर्वं चाऽनिकेतस्थितिरेव स भिक्षुः ॥ ४ ॥

ब्रह्मोपनिषदि —

बहिस्सूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः सचेतनः ॥

धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ ५ ॥

सुबालोपनिषदि प्रजापतिरुवाच —

महत्पदं ज्ञात्वा वृक्षमूले वसेत्कुचेलोऽसहाय एकाकी समाधिस्थः आत्मकाम आप्तकामो निष्कामो जीर्णकामः वृक्ष इव तिष्ठासेत् छिद्यमानो न कुप्येत न कम्पेत, उपलमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत, आकाशमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत, सत्येन तिष्ठासेत् सत्योऽयमात्मा ॥ ६ ॥

आरुणिकोपनिषदि —

गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत्, गायत्रीं च स्ववाचाग्नौ समारोपयेत्, उपवीतं भूमौ वाऽप्सु वा विसृजेत्,

कुटीं च कां ब्रह्मचारी कुटुम्बं विसृजेत् पात्रं विसृजेत्पवित्रं विसृजे-
द्दण्डान् लोकाग्नीन्विसृजेदितीहोवाच । अत ऊर्ध्वं मन्त्रवदाचरेदौष-
धवदशनमाचरेत्, औषधवदशनमाचरेत् ब्रह्मचर्यमहिंसामपरिग्रहं च सत्यं
च यत्नेन हे रक्षतो हे रक्षतो हे रक्षत इति, कामक्रोधलोभमोह-
दर्पासूयंममत्वाऽहंकारांश्च हित्वा वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी
यतिः चरेत्। द्वावेवाचरेत् द्वावेवाचरेत् यतयः भिक्षार्थं ग्रामं प्रविशन्ति
पाणिपात्रमुदरपात्रं वा ॥ ७ ॥

**मुण्डकोपनिषदि —**

पाणिपात्रमुदरपात्रं वा गेहे गेहे विशेत् । कवलमात्रेण
नापरं गृह्णीयात । पदे पदे भुञ्जन् गच्छेत् ॥ ८ ॥

**सन्यासोपनिषदि —**

आत्मानमेवं ध्यात्वाऽनपेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेत्
चतुर्षु वर्षेषु भैक्षचर्यां चरेत्। पाणिपात्रेणाऽशनं कुर्यात् । औषध-
वदशनमाचरेत् । औषधवदशनं प्राश्नीयात् । यथालाभमश्नीयात् ।
प्राणसन्धारणार्थं यथा यथा मेदोवृद्धिर्न जायते, कृशो भूत्वा ग्रामे
एकरात्रं नगरे पञ्चरात्रं चतुरो मासान् वार्षिकान् ग्रामे वा नगरे
वापि वसेत् । "पक्षा वै मासा" इति द्वौ मासौ वा वसेत् ।
विशीर्णं वस्त्रं वल्कलं वा प्रतिगृह्य नान्यत् प्रतिगृह्णीयाद् यद्यशक्तो
भवति ॥ ९ ॥

पिप्पलादशाखायां —

तत्र परमहंसा एकदण्डधरा मुण्डा अममा अपरिग्रहा अयज्ञोप-वीतिनो ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनो ब्रह्मनिष्ठाः आत्मरता-आत्मतृप्ता आत्मानं सर्वं पश्यन्तः ॥ १० ॥

कात्यायनश्रुतौ —

अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः शिखा-यज्ञोपवीतत्रिदण्डकमण्डलुकपालानां च त्यागिनः, शून्यागार देवगृह-वासिनः । न तेषां धर्मो नाऽधर्मो न सत्यं नापि चानृतम्

सर्वसहृष्यास्सर्वसमाः समलोष्टाश्मकाञ्चनाः ।

उपपन्नमात्राऽऽहाराः चातुर्वर्ण्यं भैक्षचर्यां चरन्तः आत्मान मोक्षयन्तः ॥ ११ ॥

खिलसंहितोपनिषद्रहस्ये परिव्राजकोपनिषदि —

तदेतत् विज्ञाय ब्राह्मणः परिव्रज्य परिव्राडेकशाटी मुण्डोऽपरि-ग्रहः शरीरक्लेशासहिष्णुश्चेत् अथवा यथा विधिश्चेत् जातरूपधरो भूत्वा सपुत्रमित्रकलत्राप्तबन्ध्वादीनर्थान् स्वाध्यायं सर्वकर्माणि सन्यस्याऽयं ब्रह्मदण्डं च कौपीनं च दण्डमाच्छादनं च त्यक्त्वा द्वन्द्व-सहिष्णुश्चरेत् ॥ १२ ॥

मैत्रायणीश्रुतौ —

भिक्षार्थं ग्रामं प्रविशेदामाथं प्रदक्षिणेनाऽविचिकित्सन् सार्ववर्णं भैक्षाचरणमभिशस्तपतितवर्ज्यम् ॥ "अविचिकित्सन् अस्मिन्ग्रामे

लभ्येत वा न वेति सन्देहमकुर्वन् सार्ववर्णं भैक्षाचरणं कुर्यादिति शेषः ॥ १३ ॥

एवं तत्र तत्र परमहंसचर्याप्रतिपादिन्यः श्रुतयः द्रष्टव्याः । अथ तत्प्रतिपादिन्यः काश्चन स्मृतयो लिख्यन्ते ॥

गौतमः —

अनिचयो भिक्षुरूर्ध्वरेताः ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममीयात् । जघन्यमनिवृत्तं चरेत् । निवृत्ताशीः वाक्चक्षुः- कर्मसंयतः ।

कौपीनाच्छादनार्थं वासो बिभृयात् । प्रहीणमेके निर्णिज्य । नाविप्रयुक्तमोषधिवनस्पतीनामङ्गमुपाददीत । न द्वितीयामपर्तुरात्रिं ग्रामे वसेत् । मुण्डः शिखी वा वर्जयेद्बीजवधम् । समो भूतेषु हिंसानुग्रहयोरनारम्भी । "अनिचयो निचयो वस्त्रादिसङ्ग्रहः तद्रहितस्स्याज्जघन्यमनिवृत्तं चरेत् । अनिवृत्तमावृत्य यत्र पूर्वं प्रत्याख्यातम् न तत्र प्रतिनिवृत्य तदहः प्रविशेत् । निवृत्ताशीः अस्मिन्गृहे प्रविष्टस्य साध्वी भिक्षा लभ्येत इत्यादिकया आशिषा प्रार्थनया रहितः । कौपीनाच्छादनार्थं, कौपीनं गुह्यप्रदेशः । तदाच्छाद्यते यावता तावदेव वासो बिभृयात् । प्रहीणमेके निर्णिज्य, एके मन्यन्ते तत्कौपीनाच्छादनार्थं प्रहीणं जीर्णतया अन्यैस्त्यक्तं निर्णिज्य प्रक्षाल्य बिभृयात् ।

न कुतश्चित्प्रतिगृह्णीयात् इति। औपश्चिवनस्पतीनामङ्गं फलादिकं, अविप्रयुक्तं ततः प्रच्युतं न गृह्णीयात्। ध्रुवशीलो वर्षास्वित्युक्तं, अन्यथा कामचारे प्राप्ते आह - न द्वितीयां अपर्तुरात्रिं ग्रामे वसेत्। यत्र ध्रुवशीलता उक्ता वर्षासु तामृतुं वर्जयित्वा, ऋत्वन्तरेषु यत्र ग्रामे एकरात्रमुषितः, न तत्र द्वितीयां रात्रिं वसेत्। प्रतिदिनं ग्रामाद्ग्रामं गच्छेत्। मुण्डशिशखी वा, श्रूयते हि "सशिखं वपनं कृत्वा बहिस्सूत्रं त्यजेद्बुधः। अग्रेरिव शिखा नान्या यस्य ज्ञानमयी शिखा॥ स शिखी-त्युच्यते विद्वान् नेतरे केशधारिण" इति ॥ १ ॥

आपस्तम्बः —

अथ परिव्राजोऽत एव ब्रह्मचर्यवान् प्रव्रजति, तस्योपदिशन्त्य-नग्निरनिकेतस्स्यादशर्मा शरणो मुनिः॥ स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहो नामुत्र चरेत्तस्य मुक्तमाच्छादनं विहितं सर्वतः परीमोक्षमेके, सत्यानृते सुखदुःखे वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत् ॥

अथानन्तरं परिव्राजो धर्म उच्यते - अत एव ब्रह्मचर्यवान् प्रव्रजति, अत एव ब्रह्मचर्याश्रमादेव स्वाध्याय एवोत्सृजमानो, वाचं स्वाध्यायः प्रणवादिपवित्रमन्त्राणां जपः। तत्रैव वाचं विसृजेदन्यत्र मौनव्रतो भवेत्। इहार्थाः कृष्यादयः, परलोकार्थाश्च जपहोमादयः यस्य न सन्ति सोऽनिहो नामुत्र

इत्युक्तः । स एवंभूतश्चरेत् नकस्मिन् गृहमपि वसेत । तस्य मुक्तमाच्छादनं विहितं, यत्परैः मुक्तं परित्यक्तमयोग्यतया, तत्तस्य विहितमाच्छादनम् । तद्वास आच्छादयेत । सर्वतः परिमोक्षमेके सर्वैर्वासोभिः परिमोक्षमेके उपदिशन्ति । न किञ्चिदपि वासो बिभृयात् । नग्न एव चरेदिति ॥ २ ॥

वैखानसः —

परमहंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वासिनो वासाम्बरा दिगम्बरा वा, न तेषां धर्माधर्मौ सत्यानृते, शुद्धाशुद्धादि-द्वैतं सर्वं, सर्वसमास्सर्वात्मानः समलोष्टाश्मकाञ्चनाः, सर्ववर्णेषु भैक्षा-चरणं कुर्वन्ति ॥ ३ ॥

अङ्गिराः —

यदा मनसि सञ्जातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा सन्यासमिच्छन्ति पतितस्याद्विपर्यये ॥ ४ ॥

हारीतः —

विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ॥ ५ ॥

व्यासः —

यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः ।
सन्यसेदकृतोद्वाहः ब्राह्मणो ब्रह्मचर्यवान् ॥

संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥

प्रवृत्तिलक्षणं कर्म, ज्ञानं सन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य सन्यसेदिह बुद्धिमान् ॥

यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं सङ्गृह्य सोपवीतां शिखां त्यजेत् ॥

परमात्मनि यो रक्तः विरक्तोऽपरमात्मनि ।
सर्वेषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥

पूजितो वन्दितश्चैव सुप्रसन्नो यदा भवेत् ।
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ॥ ६ ॥

ऋतुः —

अहमेवाऽक्षरं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ॥

यस्मिन् क्षान्तिश्शमश्शौचं सत्यं सन्तोष आर्जवम् ।
आकिञ्चन्यमदम्भश्च स कैवल्याश्रमे वसेत् ॥

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ॥ ७ ॥

मनुः -

दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ।
वेदान्तान्विधिवद्ज्ञात्वा सन्यसेदनृणो द्विजः ॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ८ ॥

बृहस्पतिः -

अतीतान्न स्मरेद्भोगान् न तथाऽनागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ॥

अन्तस्स्थानीन्द्रियाण्यन्तः बहिष्ठान्विषयान्बहिः ।
शक्नोति यस्सदा कर्तुं स कैवल्याश्रमे वसेत् ॥ ९ ॥

अङ्गिराः -

प्राणे गते यथा देहः सुखदुःखं न विन्दति ।
तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥ १० ॥

अत्रिः-

कौपीनयुगलं कन्था दण्ड एकः परिग्रहः ।
यतेः परहंसस्य नाऽधिकं तु विधीयते ॥

यदि वा कुरुते रागात् अधिकस्य परिग्रहम् ।
रौरवं नरकं गत्वा तिर्यग्योनिषु जायते ॥

विकीर्णान्यमलान्येव चेलानि ग्रथितानि तु ।
कृत्वा कन्थां बहिर्वासो धारयेद्धातुरञ्जितम् ॥ ११ ॥

लोकाक्ष्यां -

एकवासा अवासा वा एकदृष्टिरलोलुपः ।
एक एव चरेन्नित्यं वर्षास्वेकत्र संवसेत् ॥ १२ ॥

बाष्कलः -

कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढं चरेद्यतिः ॥ १३ ॥

पराशरः -

कामं क्रोधं तथा दर्पं लोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राण्णिर्ममो भवेत् ॥ १४ ॥

व्यासः -

रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मुनिस्स्यात्सर्वनिस्स्पृहः ॥

दम्भाऽहङ्कारनिर्मुक्तो निन्दापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥ १५ ॥

मनुः -

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततस्सिद्धिं निगच्छति ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते ॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥

यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥

सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥

सुखं ह्यवमतश्शेते सुखं च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥

अतिवादांस्तितिक्षेत नाऽवमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥

क्रुद्ध्यन्तं न प्रतिक्रुद्ध्येदक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥

चक्षुरादीनि सप्तद्वाराणि, तेषामवकीर्णां उद्वेगोत्पादिनीं वाचं, अनृतां वाचं च न वदेदित्यन्वयः ॥

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानां अमृतत्वाय कल्पते ॥

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥

भूतावासं शरीरगृहं, तस्मिन्नहन्तां न कुर्यात् ॥ १६ ॥

विपक्षे दोषमाह पराशरः -

मांसासृक्पूयविण्मूत्रे स्नायुमज्जास्थिसङ्गतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ १७ ॥

वसिष्ठश्च: -

साकालसूत्रपदवी सा महावीचिवागुरा ।
साऽसिपत्रवनश्रेणिः या देहेऽहमिति स्थितिः ॥

सा त्याज्या सर्वयत्नेन सर्वनाशेप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी ॥ इति ॥ १८ ॥

मनुः -

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माऽप्येति सनातनम् ॥

अनेन विधिना सर्वांस्त्यक्त्वा सङ्गान् शनैश्शनैः ।
सर्वद्वन्द्वैर्विप्रमुक्तो ब्रह्मण्येवाऽवतिष्ठते ॥

एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।
सिद्धिमेकस्य पश्यन्हि न जहाति न हीयते ॥

सिद्धिमेकस्य पश्यन्, एकस्यैव सिद्धिः नाऽन्यस्येति जानन् सिद्धिं न जहाति, न परित्यजति । हि यस्मात्, तस्मात् सिद्ध्या च अयं न हीयते न परित्यज्यते । एकस्यैव सतः परमहंसस्य स्वयमेव सिद्धिराविर्भवतीति भावः ।

कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥

कपालं भिक्षापात्रम् ॥ ९ ॥

याज्ञवल्क्यः -

सर्वभूतहितश्शान्तः त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत् ॥

त्रिदण्डी वाक्दण्ड मनोदण्ड कायदण्डवान् । एकारामः परिव्राजकान्तरेणासहायः ॥ २० ॥

दक्षः -

एको हि भिक्षुर्यथोक्तः द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामस्समाख्यातः ऊर्ध्वं तु नगरायते ॥

नगरं न हि कर्तव्यं ग्रामो वा मिथुनं तथा ।
एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ॥

राजवार्तादि तेषां स्याद्भिक्षावार्ता परस्परम् ।
स्नेहपैशुन्यमात्सर्यं सन्निकर्षान्न संशयः ॥

एकाकी निस्स्पृहस्तिष्ठेत् न केनापि सहावसेत् ।
दद्यान्नारायणेत्येव प्रतिवाक्यं सदा यतिः ॥ २१ ॥

संवर्तः -

एकाकी चिन्तयेद्ब्रह्म मनोवाक्कायकर्मभिः ।
मृत्युं च नाभिनन्देत जीवितं वा कथञ्चन ॥
कालमेव प्रतीक्षेत यावदायुस्समाप्यते ॥ २२ ॥

मनुः -

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ॥

निर्वेशं भृतिम् ॥ २३ ॥

संवर्तः -

अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥

इदं मृष्टं इदं नेति योऽश्नन्नपि च सज्जति ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥

अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारस्स षण्डकः ॥

भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ॥

तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते ॥

हितं मितं मनोरामं वचश्शोकावहं च यत् ।
श्रुत्वापि न शृणोतीव बधिरस्स प्रकीर्तितः ॥

सान्निध्ये विषयाणां यस्समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ २४ ॥

दक्षः -

नटादिप्रेक्षणं द्यूतं प्रमदां सुहृदं तथा ।
भक्ष्यं भोज्यं उदक्यां च षण्ण पश्येत्कदाचन ॥

रागं द्वेषं मदं मायां द्रोहं मोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ॥ २५ ॥

मेधातिथिः -

मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च ।
दिवास्वापं च यानं च यतीनां पतनानि षट् ॥ २६ ॥

विष्णुः -

दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
सदोपनिषदं विद्यामभ्यसेन्मुक्तिहेतुकीम् ॥ २७ ॥

मनुः -

न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः ।
न चाऽध्ययनशीलस्स्यान्न व्याख्यानपरो भवेत् ॥

अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ॥

क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ।
निर्द्वन्द्वो निर्नमस्कारो निस्स्वधाकार एव च ॥

निर्ममो निरहङ्कारो निरपेक्षो निराशिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्र संशयः ॥ २८ ॥

विष्णुः -

त्यक्त्वा लोकांश्च वेदांश्च विषयाणीन्द्रियाणि च ।
आत्मन्येव स्थितो यस्तु स याति परमां गतिम् ॥

नामगोत्रादि चरणं देशं कालं श्रुतं कुलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ॥ २९ ॥

मेधातिथिः -

न संभाषेत् स्त्रियं काश्चित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥

एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति ॥ ३० ॥

अत्रिः -

तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाऽप्रियौ ।
शिल्पं व्याख्यानयोगश्च कामो रागः परिग्रहः ॥

अहङ्कारो ममत्वं च चिकित्साऽधर्मसाहसम् ।
प्रायश्चित्तं प्रवासश्च मन्त्रौषधगिराशिषः ॥

प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ।
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा ॥
सम्माननं च न ब्रूयान्मुनिर्मोक्षपरायणः ॥ ३१ ॥

अंगिराः -

प्रतिग्रहं न गृह्णीयान्नैव चान्यं प्रदापयेत् ।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन ॥

जायाभ्रातृसुतादीनां बन्धूनां च शुभाऽशुभम् ।
श्रुत्वा दृष्ट्वा न कम्पेत शोकहर्षौ त्यजेद्यतिः ॥

पूर्वाश्रमस्य वृत्तान्तं योऽनिशं शृणुयाद्यतिः ।
वक्ता च नरकं याति श्रोता च पतितो भवेत् ॥ ३२ ॥

अत्रिः -

अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः ।
अनौद्धत्यमदीनत्वं प्रसादस्थैर्यमार्जवम् ॥

अस्नेहो गुरुशुश्रूषा श्रद्धा शान्तिर्दमश्शमः ।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ॥

ह्रीस्तथा ज्ञानविज्ञाने योगो लघ्वाशनं धृतिः ।
एषः स्वधर्मो विख्यातो यतीनां नियतात्मनाम् ॥

निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसस्साक्षान्नारायणो यतिः ॥ ३३ ॥

कण्वः -

एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
सर्वेभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥ ३४ ॥

विष्णुः -

द्विरात्रं न वसेद्ग्रामे भिक्षुर्यदि वसेत्तदा ।
रागादयः प्रसज्येरन् तेनाऽसौ नारकी भवेत् ॥

ग्रामान्ते निर्जने देशे नियतात्माऽनिकेतनः ।
पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संवसेत् ॥ ३५ ॥

दक्षः -

एकवासा अवासा वा एकदृष्टिरलोलुपः ।
अदूषयन्सतां मार्गं ध्यानयुक्तो महीं चरेत् ॥ ३६ ॥

अत्रिः -

शुचौ देशे तथा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत सदा योगी वीक्षयन्वसुधातलम् ॥

न रात्रौ न च मध्याह्ने सन्ध्ययोर्नैव पर्यटेत ।
न शून्ये न च दुर्गे वा प्राणिबाधकरे न च ॥

एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुः नगरे पंचरात्रकम् ॥

वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ।
आत्मवत्सर्वभूतानि पश्यन् भिक्षुश्चरेन्महीम् ॥

अन्धवत्कुब्जवच्चैव बधिरोन्मत्तमूकवत् ।
नामगोत्रादि चरणं देशं वासं श्रुतं कुलम् ॥
वयो वृत्तं बलं शीलं ख्यापयन्न वसेद्यतिः ॥ ३७ ॥

मेधातिथिः -

स्नानं त्रिषवणं प्रोक्तं नियमास्स्युस्त्रिदण्डिनाम् ।
हंसे तु सकृदेव स्यात्परहंसे न विद्यते ॥ ३८ ॥

अत्रिः —

स्नानं त्रिषवणं प्रोक्तं नियमास्स्युस्त्रिदण्डिनाम् ।
न तत्परमहंसानां युक्तानामात्मदर्शिनाम् ॥ ३९ ॥

तर्हि परमहंसानां को धर्म इत्यत्राह स एव —

मौनं योगासनं योगः तितिक्षैकान्तशीलता ।
निस्स्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम् ॥

योगासनं योगः अभेदविज्ञानं, तत्रासनमवस्थानं निष्ठा ॥ ४० ॥

व्यासः —

अहं ममेति विण्मूत्रे लेपगन्धादिमोचनम् ।
शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥

तर्हि लौकिकं वा प्रक्षालनं कुर्वीतिचेन्न, हन्त, निरन्तरं नवच्छिद्रेभ्यः स्रवत्सु मलेषु असंख्यातैः रोमकूपैः खिन्ने गात्रे को नामाखेदेन प्रक्षालयितुं शक्नुयात् । तथा चाहुः —

नवच्छिद्रकृता देहाः स्रवन्ति घटिका इव ।

बाह्यशौचेन शुद्ध्यन्ति नान्तश्शौचं तु विद्यते ।
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते ॥ इति ॥

अत एव बाह्यशौचस्य फलमसूत्रयत्पतञ्जलिः —

“ शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ” इति ॥

जुगुप्सितत्वाविशेषात् परैः स्त्र्यादिशरीरैः संसर्गाभावश्च भवतीति शेषः । एतज्जुगुप्सितत्वं विस्पष्टमुदाजह्रुः श्रुतिस्मृतयः –

भगवन् अस्थिचर्मस्नायुमज्जामांसशुक्लशोणितश्लेष्मा-श्रुदूषिते विण्मूत्रे वातपित्तसङ्घाते दुर्गन्धेऽस्मिन् शरीरे किं कामोपभोगैरिति ।

शरीरमिदं मैथुनादेवोद्भूतं, संविद्व्यपेतं निरय एव । मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनाऽनुलिप्तं चर्मणावबद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्च मलैः बहुभिः परिपूर्णं कोश एव वसुनेति च ॥

त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रमीणां कियदन्तरम् ॥

क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व चाङ्गशोभासौरभ्यकमनीयादयो गुणाः ॥

मांसाऽसृक्पूयविण्मूत्रस्नायुमज्जाऽस्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढः भविता नरकेऽपि सः ॥

स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ॥

चर्मखण्डं द्विधा भिन्नं अपानोद्गारधूपितम् ।
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥ इति ।

अलमनेन शरीरवैभवोद्घोषणेन । पुनरपि तस्यैव परमहंसस्य धर्ममाह –

व्यास: —

न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चित: ।
निर्ममो निर्भयश्शान्त: निर्द्वन्द्वोऽवर्णभोजन: ॥

मुनि: कौपीनवासास्स्यात् नग्नो वा ध्यानतत्पर: ।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ॥

लिङ्गे असत्यपि खलु ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थक: ॥

यत्र सन्तं न चाऽसन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मण: ॥

तस्मादलिङ्गो धर्मज्ञो ब्रह्मवृत्तमनुव्रतम् ।
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ॥

सन्दिग्धस्सर्वभूतानां वर्णाश्रमविवर्जित: ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥

तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकस: ।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् ॥

स्मृत्यन्तरे: —

प्रतिष्ठा सूकरीविष्ठासमा गीता महर्षिभि: ।
तस्मादेनां परित्यज्य कीटवत्पर्यटेद्यति: ॥

व्यासः —

अयाचितं यथालाभं भोजनाच्छादनं भवेत् ।
परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया ॥

स्वप्नेऽपि यो हि युक्तस्स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टस्स्मृतः श्रेष्ठः वरिष्ठो ब्रह्मवादिनाम् ॥

मनुः —

अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रस्स्यात् मात्रासङ्गान्विनिर्गतः ॥

उदरपूरणावधिर्मात्रा तत्र सङ्गः, मात्रासङ्गः, ततो निवृत्तः इत्यर्थः ।

अभिपूजितलाभांश्च जुगुप्सेतैव सर्वशः ।
अभिपूजितलाभैस्तु यतिर्मुक्तोऽपि बद्ध्यते ॥

प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने ।
काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥

शौनकः —

पाणिपात्रं चरेद्योगी नाऽसकृद्भैक्षमाचरेत् ।
तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यात् मध्ये नाचमनं तथा ॥

असकृत् अव्यवस्थितं यथा भवति तथा भैक्षं नाचरेत् किन्तु, पाणिपात्रस्सन्नेव । अयं नियमस्सर्वत्रोदरपात्रमौनत्वादिषु समानः । तथा चाह—

अब्धिवद्धृतमर्यादा भवन्ति विशदाशयाः ।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ इति ।

उदरपात्रलक्षणमाह — भारती

आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।
तदा समस्यान्सर्वेषु सोऽमृतत्वाय कल्पते ॥

अत्रिः —

अनिन्द्यं चै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत् ।
अनावृते विशेद्द्वारि गेहे नैवावृते व्रजेत् ॥

अथ तत्प्रतिपादकानि कानिचिदितिहासपुराणागमाभियुक्त-वचनानि लिख्यन्ते ।

॥ महाभारते ॥

अशिल्पजीवी न गृहस्थश्च नित्यं
जितेन्द्रियस्सर्वतो विप्रमुक्तः ।
अनेकस्थानी लघुरल्पाशनश्च
चरन्देशानेकचरस्स भिक्षुः ॥ -१

पांसुना च प्रतिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ -२

यत्राऽस्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथा लब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ -३

निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ॥ -४

अभयं सर्वभूतेभ्यो दत्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ -५

निर्मानश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुद्ध्यति न द्वेष्टि नानृता भाषते गिरः -६

पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते चरेद्भैक्षं कल्पते ब्रह्मभूयसे ॥ -७

वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातचर्यां लिप्सेत न चैनं हर्ष आविशेत् ॥ -८

ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।
अध्वा सूर्येण विर्दिष्टः कीटवद्विचरेन्महीम् ॥ -९

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसङ्ग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥ -१०

॥ श्रीभागवते ॥

एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ -१

नाऽसच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादांस्त्यजेत्तर्कान् पक्षं कञ्चन नाश्रयेत् ॥ -२

न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भान्नारभेत्क्वचित् ॥ -३

अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ॥ -४

न कुर्यान्न वदेत्किञ्चित् न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ -५

एकश्चरेन्महीमेतां निस्सङ्गस्संयतेन्द्रियः ।
आत्मक्रीड आत्मरत आत्मवान्समदर्शिनः ॥ -६

बुधो बालकवत्क्रीडेत् कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यान्नैगमश्चरेत् ॥ -७

नैगमः सकलवेदार्थविदपि गवां चर्यां चरेत् । अनियताचारो भवेदिति यावत् ।

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयतेऽपि वा ।
ताडितस्सन्निरुद्धो वा वृत्त्या वा परितापितः ॥ -८

निष्ठितो मूत्रितो वाज्ञैः बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगतः आत्मनाऽत्मानमुद्धरेत् ॥ -९

॥ श्रीविष्णुपुराणे ॥

सम्माननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनाऽवमतो योगी योगसिद्धिं च विन्दति ॥ -१

तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथाऽवमन्येरन् गच्छेयुर्नैव सङ्गतिम् ॥ -२

जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥ -३

कामक्रोधौ तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राण्णिर्ममो भवेत् ॥ -४

॥ कूर्मपुराणे ॥

भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥ -१

यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामतिः ।
स सम्यग्दर्शनस्तस्मात्स योगी भिक्षुरुच्यते ॥ -२

यस्सर्वसङ्गनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः ।
प्रोच्यते ज्ञानसन्यासी स्वात्मन्येव व्यवस्थितः ॥ -३

ज्ञानार्थं ज्ञानानन्तरं वा क्रियमाणस्सन्यासो ज्ञानसन्यासः तद्वान् ज्ञानसन्यासी ।

निर्द्वन्द्वो निर्मदश्शान्तः निर्ममो निष्परिग्रहः ।
जीर्णलोहितवासास्स्यात् सत्यवाग्ज्ञानतत्परः ॥ -४

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थं विचरेद्द्विजः ॥ -५

रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मौनी स्यात्सर्वनिस्पृहः ॥ -६

काषायवासास्सततं ध्यानयोगपरायणः ।
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ॥ -७

समश्शत्रौ च मित्रे च तथा मानावमानयोः ।
भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्क्वचित् ॥ -८

॥ आग्नेयपुराणे ॥

चित्तशुद्धिर्भवेद्यावत् तावन्नित्यं चरेत्सुधीः ।
ततः प्रव्रज्य शुद्धात्मा सञ्चरेद्यत्र कुत्रचित् ॥ -१

सर्वत्र समदृग्योगी समलोष्टाश्मकाञ्चनः ।
बहिरन्तश्च सर्वत्र सम्पश्यन् हि जनार्दनम् ॥ -२

सर्वत्र विचरन्मौनी वायुवद्वीतकल्मषः ।
समदुःखसुखः क्षान्तः हस्तप्राप्तं च भक्षयन् ॥ -३

निर्वैरेण समं पश्यन् द्विजगोऽश्वमृगादिषु ।
मानाऽवमानयोस्तुल्यः उन्मत्त इव सर्वदा ॥ -४

भावयन्मनसा विष्णुं परमात्मानमीश्वरम् ।
चिन्मयं परमानन्दं ब्रह्मैवाऽहमिति स्मरन् ॥ -५

॥ मार्कण्डेयपुराणे ॥

आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनेषु सिद्ध्यर्थी न गच्छेद्योगवित्क्वचित् ॥ -१

यथैनमवमन्यन्ते जना: परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयेत् ॥ -२

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रिय: ।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ॥ -३

शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तस्सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ -४

वाग्दण्ड: कर्मदण्डश्च मनोदण्डश्च ते त्रय: ।
यस्यैते नियता दण्डा: स त्रिदण्डी महायति: ॥ -५

॥ स्कान्दपुराणे नागरखण्डे ॥

एकरात्रं वसेद्ग्रामे द्विरात्रं पत्तने वसेत् ।
यो यतिस्स यति:प्रोक्त: नाऽन्यो योगविडम्बन: ॥ -१

विधूमे च प्रशान्ताग्नौ यस्तु माधुकरीं चरेत् ।
गृहे च विप्रमुख्यानां यतिस्सर्वोत्तरस्स्मृत: ॥ -२

दण्डभिक्षां च य: कुर्यात् स्वधर्मे व्यसनं विना ।
यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि स: ॥ -३

**दण्डो निग्रह:, तत्पूर्विकां भिक्षां य: कुर्यात्, स्वधर्मे शमदमादौ व्यसनं विना, यस्तिष्ठति, स वैराग्यं तत्साध्यं ज्ञानं च, न याति, स च नीचयतिरित्युच्यत इत्यर्थ: ।**

दिवास्वापं च यानं च स्त्रीकथाऽऽलोकमेव च ।
श्वेतवस्त्रं हिरण्यं च यतीनां पतनानि षट् ॥ -४

समशत्रौ च मित्रे च समलोष्टाश्मकाञ्चनः ।
सुहृत्पुत्रे परे चैव स यतिर्नेतरः स्मृतः ॥ -५

समो मानेऽवमाने च स्वदेशे परकेऽपि वा ।
यो न हृष्यति न द्वेष्टि स यतिर्नेतरः स्मृतः ॥ -६

यस्मिन्गृहे विशेषेण लभेद्भिक्षां च वासनात् ।
तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः ॥ -७

॥ तत्रैव सूतसंहितायां ॥

श्रीशिवः —

यश्शरीरेन्द्रियादिभ्यो विभिन्नं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानसुखात्मानं स्वयं प्रभुम् ॥ -१

परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥ -२

नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥ -३

यस्य वर्णाश्रमाचारः गलितस्स्वात्मदर्शनात् ।
स वर्णानाश्रमान्सर्वान् अतीत्य स्वात्मनि स्थितः ॥ -४

योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ॥ -५

तस्मादन्यगता वर्णा आश्रमा अपि केशव ।
आत्मन्यारोपितास्सर्वे भ्रान्त्या ते नात्मवेदिनाम् ॥ -६

न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
ब्रह्मविज्ञानिनामस्ति तथा नान्यज्जनार्दन ॥ -७

॥ पद्मपुराणे ॥

विरज्य सर्वभोगेभ्य आविरिञ्चिपदादपि ।
घृणां विपाट्य सर्वस्मिन् पुत्रमित्रादिकेष्वपि ॥ -१

श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ -२

सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सदा वेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ -३

निर्ममो निरहङ्कारः सर्वसङ्गविवर्जितः ।
सदा शान्त्यादियुक्तस्सन् आत्मन्यात्मानमीक्षते ॥ -४

॥ पराशरोपपुराणे ॥

संसारदोषदृष्ट्यैव विरक्तिर्जायते द्विज ।
विरक्तस्य तु संसारात् सन्न्यासस्स्यान्न संशयः ॥ -१

मुमुक्षुः परमहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥ -२

ब्रह्मविज्ञानलाभाय परहंससमाहृयः ।
शान्तिदान्त्यादिभिस्सर्वैः साधनैस्सहितो भवेत् ॥ -३

॥ आदित्यपुराणे ॥

वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ।
निर्भयो निर्ममो नित्यं निर्द्वन्द्वो निष्परिग्रहः ॥ -१

सर्वसङ्गविहीनश्च निर्द्वन्द्वो निष्परिग्रहः ।
जीर्णकौपीनवासास्स्यात् मुण्डी नग्नोऽथवा भवेत् ॥ -२

प्राज्ञो वेदान्तविद्योगी निर्ममो निरहङ्कृतिः ।
दान्तस्सुसंयतो ध्यानी निराशो विगतस्पृहः ॥ -३

सर्वसङ्गविहीनश्च निर्द्वन्द्वो निरुपप्लवः ।
सर्वकर्मपरित्यागी जडान्धबधिराकृतिः ॥ -४

मित्रादिषु समो मित्रं समस्तेष्वेव जन्तुषु ।
एको ज्ञानी प्रशान्तात्मा स सन्तरति नेतरः ॥ -५

॥ मत्स्यपुराणे ॥

गुरूणां च हिते युक्तः तत्र संवत्सरं वसेत् ।
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ॥ -१

नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ।
अविरोधेन धर्मस्य चरेत पृथिवीमिमाम् ॥ -२

॥ लिङ्गपुराणे ॥

आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् ।
ततस्संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ॥ -१

अनुज्ञाप्य गुरुं चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥ -२

पिधाय बुद्ध्या द्वाराणि ध्यानेनैकमना भवेत् ।

॥ वायुपुराणे ॥

द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥ -१

माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा तु माद्यति ।
तस्माद्द्विषन्सुरां नारीं दूरतः परिवर्जयेत् ॥ -२

सम्भाषणं सह स्त्रीभिः आलापप्रेक्षणे तथा ।
नृत्तं गानं साहसं च परीवादांश्च वर्जयेत् ॥ -३

॥ देवीकालोत्तराख्ये शैवागमे ॥

देवीं प्रतीश्वरः —

न स्नानं न जपः पूजा न होमो नैव साधनम् ।
नाऽग्निकार्यादि कार्यं च नैतस्यास्ति महेश्वरि ॥ -१

नियमोऽपि न तस्यास्ति क्षेत्रपिण्डादिसेवनम् ।
नार्चनं पितृकार्यं च तीर्थयात्रा व्रतानि च ॥ -२

धर्माऽधर्मादिकं नास्ति न विधिर्लौकिकक्रिया ।
सन्त्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः ॥ -३

कृमिकीटपतङ्गांश्च तथा देवि वनस्पतीन् ।
न नाशयेद्बुधो जीवान् परमार्थमतिर्यतिः ॥ -४

ज्ञानवासिष्ठे श्रीरामं निमित्तीकृत्य परमहंसधर्मनिर्वाहः

वसिष्ठः —

निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ।
अद्वितीयो विशोकात्मा विज्वरो भव राघव ॥ -१

**अद्वितीयः भेदवासनारहितः, विज्वरः विगततापत्रयः ।**

उदारः पेशलाचारः सर्वाचारानुवृत्तिमान् ।
अन्तस्सङ्गपरित्यागी लोके विहर राघव ॥ -२

सर्वमेव परित्यज्य महामौनी भवानघ ।
निर्वाणवान्निर्मनस्कः क्षीणचित्तः प्रशान्तधीः ॥ -३

आत्मन्येव प्रशान्तात्मा मूकान्धबधिरोपमः ।
नित्यमन्तर्मुखस्स्वास्थ्य प्रशान्तात्मा स्वपूर्णधीः ॥ -४

आस्व तिष्ठ

।। श्रीमद्रामायणे ।।

नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्र सायं गृहे मुनिः ।। -१

धन्याःखलु महात्मानः मुनयस्सत्यसम्मताः ।
जितात्मानो महाभागा येषां नास्ति प्रियाप्रियम् ।। -२

सत्यमनृतानभिवादनं. तदेव सम्मतमभिमतं येषां ते तथा ।

।। तत्रैव श्रीहनूमान् ।।

हस्तादानो मुखादानो नियतो वृक्षमूलिकः ।
वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ।। -१

वानप्रस्थशब्देनात्र परमहंस एवोच्यते । तद्धर्मस्यैवाभिधानात् ।

।। स्वकृतौ भर्तृहरिः ।।

एकाकी निस्स्पृहश्शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ।। -१

।। गौडपादीये ।।

निस्स्तुतिर्निर्नमस्कारो निस्स्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ।। -१

चलाचलनिकेतः, व्यवहारदृष्ट्या चलः अनियतः निकेतो वृक्षमूलादिः; परमार्थदृष्ट्या अचलः परमात्मैव निकेतः स्थानं यस्य स तथा ।

ग्रंथकृतायांपञ्चाशीत्याम्-
मदकोपहर्षमत्सर-
विषादभयपरुषवर्ज्यवाक्बुद्धिः ।
निस्तोत्रवषट्कारो
जडवद्विचरेदगाधमतिः ॥ -१

आत्मविद्याविलासे-
अवधूतकर्मजालो
जडबधिरान्धोपमः कोऽपि ।
आत्मारामो यतिराट्
अटवीकोणेष्वटन्नास्ते ॥ -१

श्रुत्यादिभिरधिगम्यां
चर्यामार्यकसेवितामेताम् ।
अनुतिष्ठन्तु यतीन्द्राः
कैवल्यानन्दकाङ्क्षिणस्सर्वे ॥

शान्तो दान्तो विमलः
शान्ताशेषैषणो मुनिजनेड्यः ।
अस्ति हि विबुधो यस्तं
परमशिवेन्द्रं भजामि निस्तन्द्रम् ॥

॥ इति श्रुत्यादिसारसङ्ग्रहस्समाप्तः ॥

हरिःओं ।                                                  शुभमस्तु ।

श्रीगुरोश्चरणद्वन्द्वमद्वन्द्वानन्दसाधनम् ।
तद्वन्दे यद्रजस्पर्शान्मुक्तास्स्युश्शिष्यकोटयः ॥ -१

श्रीमहाभारते शास्त्रे भक्तिज्ञानादिलक्षणम् ।
लिखामि परहंसानां चर्यामार्यजनेडिताम् ॥ -२

अत्रादौ वैराग्यलक्षणं परहंसचर्यामुपदर्शयितुमिदमाह –

ययातिः -

क्रोधो हि धर्मं हरति यतीनां दुःखसञ्चितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ -३

धर्मशब्देन शमदमादिरेवोच्यते । "यतेरुपशमो धर्मः" इति स्मृतेः । "शमदमादिरेव पारहंस्यो धर्मः" इति भगवत्पादीयवचनाच्च । ततः, शमदमादिधर्मरहितानां आत्मानुदयेन इष्टा गतिर्मोक्षो न सिद्ध्यति । अथवा, मोक्षसाधनत्वात् इष्टगतिशब्देन, आत्मानुभवोऽभिधीयते । स च न सिद्ध्यतीत्यर्थः ।

।। व्यतिरेकमुक्त्वाऽन्वयमाह ।।

शम एव यतीनां हि मोक्षिणां सिद्धिकारकः ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ -४

कुटीचकादियतित्रयं वारयति मोक्षिणामिति । मोक्षेच्छावतामित्यर्थः । तेषां तद्भावस्मरणादिति भावः । शमशब्दो दमादिकमुपलक्षयति । स च शमदमादिरेव सिद्धिकारकः । आत्मानुभवसम्पादकः । स चात्मानुभवः अपरोक्षपरोक्षत्वभेदेन द्विविध इति दर्शयितुमिदमाह – क्षमेति । लोक्यत इति लोकः आत्मानुभवः । स चापरोक्ष इति दर्शयति – अयमिति । अपरोक्षानुभवात्परः अन्यः परोक्षानुभवः, सोऽपि शमदमादिसम्पन्नानामेव भवति । नाऽन्येषां । तथा च श्रुतिः – "शान्तो दान्त उपरत" इत्याद्या ।

शमादेरुपायमाह —

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते ॥ -५

काम्यन्त इति कामाः, शब्दादयः, विषयाः तेषाम् । कृष्णवर्त्मा अग्निः ।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वं इति मत्वा शमं व्रजेत् ॥ -६

यदा न कुरुते भावं सर्वभूतेषु पावकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ -७

न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ -८

अयं परमहंसः लोकेभ्यो न बिभेति । स व्यतिरेकेण वस्त्वन्तराभावात् । अस्मात्परमहंसात् लोकाः न बिभ्यति । सर्वभूतेभ्योऽभयप्रदानात् । अप्राप्तमिष्टं नेच्छति, प्राप्तमनिष्टं न द्वेष्टि, तत्त्वेन प्रतीत्यभावात् ।

यस्समुत्पतितं क्रोधमक्रोधेनैव हास्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ।

हास्यति त्यजति ।

न केवलं परमहंसानामेव क्रोधस्त्याज्यः । किन्तु,

संसारिणामपीत्याह —

क्रुद्धस्य निष्फलान्येव दानयज्ञतपांसि च ।
पितृभ्रातृसुहृन्मित्रभार्या धर्मश्च सत्यता ॥ -१०

परोपकारमनपेक्ष्य उपकर्ता सुहृत् । स्नेहवान्मित्रम् ।

न च कुर्यान्नरो दैन्यं शाठ्यं क्रोधं तथैव च ।
जिह्मं च मत्सरं वैरं सर्वत्रैतान्न कारयेत् ॥ -११

मत्सरं विषमत्वं, वैरं हिंस्रत्वम् ।

अशिल्पजीवी न गृहस्थश्च नित्यं
जितेन्द्रियस्सर्वतो विप्रमुक्तः ।
अनेकस्थानी लघुरल्पाशनश्च
चरन्देशानेकचरस्स भिक्षुः ॥ -१२

शिल्पेन जीवितुं शीलमस्येति शिल्पजीवी, स न भवतीति अशिल्पजीवी. प्रारब्धकर्मैव सर्वं प्रापयतीति निर्व्यापरो भवेदिति यावत्। गृहे न तिष्ठतीति न गृहस्थः, भिक्षाकाल एव गृहे तिष्ठेत्तदन्यत्र वृक्षमूलादौ वसेत् । अनेकस्थानी नियतनिकेतशून्यः । वस्त्रादिना लघुः । एकवासाः तद्रहितो वा भवेत् । एकचरः असहायः. यस्त्वेतादृशः सन् देशान् चरति स एव भिक्षुर्नेतर इत्यर्थः ।

कौपीनाच्छादने चीरी सर्वस्वादुविवर्जितः ।
यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् ॥ -१३

कौपीनं गुह्यप्रदेशः, तदाच्छाद्यते यावता, तत् कौपीनाच्छादनं, तस्मिन् । "चर्मणि द्वीपिनं हन्ति" इतिवत् निमित्तार्थेयं सप्तमी । तदर्थं चीराणि वासांसि सकलान्यस्य सन्तीति स तथोक्तः ।

यस्तु कामानपरित्यज्य परित्यक्तजितेन्द्रियः ।
आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥ -१४

तपसाऽगर्वितः क्षामः क्षीणमांसास्थिशोणितः ।
यदा भवति निर्द्वन्द्वः मुनिर्मौनं समास्थितः ॥ -१५

अगर्वितः अनहङ्कृतः, क्षामः कृशः, तत्र हेतुमाह क्षीणेति। ननु केषांचित्पुष्टिर्दृश्यत इति चेत्, दृश्यतां नाम । तथापि तदर्थं मृष्टान्नादौ यत्नं न कुर्यात् । अन्यथा तल्लम्पटत्वेन पुरुषार्थाद्भ्रष्टः, कष्टां गतिं प्राप्नुयात् । तथा च श्रुतिः –

"तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ।
भिक्षापात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥
स याति नरकान्घोरान् महारौरवसंज्ञितान्" । इति ॥

यस्मादेवं, तस्मान्मुनिः यदा मौनं तूष्णींभावमेव आस्थितो भवेत्तदा, निर्द्वन्द्वः शीतोष्णादिद्वन्द्वान्निष्क्रान्तः, परमानन्दलक्षणं कैवल्यं प्राप्तो भवति । तथा चाह

वसिष्ठः —

किल तूष्णीं स्थितेनैव तत्पदं प्राप्यते परम् ।
परमं यत्र साम्राज्यं अपि राम, तृणायते ॥ इति ॥

विहाय मत्सरं दैन्यं दर्पं दम्भं च पैशुनम् ।
क्रोधं लोभं महत्त्वं च यस्य नास्ति स धर्मवित् ॥ -१६

मत्सरादिकं विहाय यस्तिष्ठति, यस्य तु महत्त्वं महत्त्वाभिमानं च नास्ति, स एव धर्मवित् इत्यन्वयः ॥

पाण्डुः —

सद्वृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ।
अतीव तपसाऽऽत्मानं योजयिष्याम्यसंशयम् ॥ -१७

पितुः वेदव्यासस्याभिमतां अव्ययामनुच्छिन्नां. सद्वृत्तिं पारमहंस्यं. तपसा ऐकाग्र्येण. आत्मानं चित्तम् ।

तस्मादेकाहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्, भिक्षामहं मुण्डः चरिष्यामि महीमिमाम् ॥ -१८

पांसुना च प्रतिच्छन्नश्शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ -१९

न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ॥ -२०

न जात्वभिहसन् किञ्चित्, न कुर्वन् भ्रुकुटीं क्वचित् ।
प्रसन्नवदनो नित्यं सर्वप्राणभृतः प्रति ॥ -२१

जङ्गमाजङ्गमं सर्वमभ्यर्हिंसन् चतुर्विधम् ।
प्रजावर्गेष्ववर्गस्थः समस्सर्वप्रजासु च ॥ -२२

प्रजावर्गाः प्रजासन्ततयः, तेष्वेकस्मिन्नपि वर्गे न तिष्ठतीत्य-वर्गस्थः । स्वजात्यादिकमप्रख्यापयन् चरेदिति भावः ॥

॥ इति सम्भवपर्वश्लोकाः ॥

स्वजात्यादिप्रकटनादिकं अतिनिषिद्धमित्याह --

भीष्मं प्रति शिशुपालः —

आत्मनिन्दाऽऽत्मपूजा च परनिन्दा परस्तुतिः ।
अनाचरितमार्याणामिति ते भीष्म, न श्रुतम् ॥ -२३

ते त्वया नन्वनाचरितं आत्मपूजादिकमाचरन्तः शास्त्रं किं न जानन्ति इत्यपेक्षायामाह –

न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ -२४

यथा कुलिङ्गशकुनिर्नाम पक्षिविशेषः स्वयं साहसं मा कुर्विति वदन्नपि दारितदन्तिनः सिंहस्य मुखान्मांसमादत्ते, तथा शास्त्रं जानन्तोऽपि प्रकृतिं स्वस्वभावं यान्तीत्यर्थः ।

॥ इत्येतौ सभापर्वश्लोकौ ॥

युधिष्ठिरं प्रति सर्परूपो नहुषः —

ब्राह्मणः को भवेद्राजन् वेद्यं किन्तु युधिष्ठिर ।

युधिष्ठिरः —

सत्यं दानं क्षमा हिंसा आनृशंस्यं दमो घृणा ।
विद्यते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥ -२५

दानं सर्वभूतेभ्योऽभयप्रदानं, आनृशंस्यमघातुकत्वं ब्राह्मणः ब्रह्मवित् परमहंसः ॥

वेद्यं सर्पं, परं ब्रह्म न दुःखं न सुखं च यत् ।
यत्र गत्वा न शोचन्ति महान्तः कृतनिश्चयाः ॥ -२६

न दुःखं परमानन्दरूपत्वात्, नापि वैषयिकं सुखमनित्यत्वात् । एतादृशब्रह्मप्राप्तौ कानि साधनानि इत्यपेक्षायामाह —

सत्यं दमस्तपो योगः अहिंसा दाननित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ -२७

दाननित्यता नित्यमभयप्रदानम् ।

ब्राह्मणं प्रति धर्मव्याधः —

शक्त्या च दानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ॥ -२८

शक्त्या च दानं, यथाशक्ति ब्रह्मविद्याप्रदानं, धर्मनित्यता नित्यं गुरुशुश्रूषादिधर्मः, यथार्हं यथायोग्यं ज्येष्ठं प्रति पूजा-वन्दनादिकं, एतत्साधनजातं परित्राणमुमुक्षुः सततमाचरेदिति भावः ।

किञ्च,

न पापान्प्रति पापस्स्यात साधुरेव सदा भवेत् ।
आत्मनैव हतः पापः यः पापं कर्तुमिच्छति ॥ -२९

पापान्, दूषकान्प्रति स्वयं पापो दूषको न स्यात्। किन्तु सदा साधुरेव स्वहितकार्येव भवेत्। सर्वथा स्वहितमाचरणीयमिति न्यायात्, तेषामनिष्टादिचिन्तनं तु व्यर्थमित्याह — आत्मनैवेति उत्तरार्धं विवृणोति।

> वसनस्येव च्छिद्राणि साधूनां विवृणोति यः।
> अपश्यन्नात्मनो दोषान् स पापः प्रेत्य नश्यति ॥ -३०

यथा कश्चिद्धूर्तः, स्वकीयस्य वसनस्य अशेषाङ्गावभासकानि अपि, च्छिद्राण्यपश्यन्, परकीयवसनस्य च्छिद्राभावेऽपि तत्र कानिचिच्छिद्राण्यारोप्य, तद्द्वारा गुह्यप्रदेशादिकं पश्यन्निव अन्यत्र कथयति, कथयन्हसति, तथा, यः कश्चन, आत्मनः स्वस्य, पतनहेतून् परप्रसिद्धानपि दोषानपश्यन् निर्लज्जतया, साधूनामाजन्मपरिशुद्धानां, दोषलेशाभावेऽपि ईर्ष्यया तत्र कतिपयान्दोषानारोप्य, तानन्यत्र विवृणोति, विवृण्वन् हसति, स पापः प्रेत्य मृत्वा नश्यति बहुविधा यामीर्यातनाः अनुभूय, ततो जननमरणरूपां कष्टां गतिं प्राप्नोतीत्यर्थः।

तदुक्तम् —

> सद्यः श्रियं हरति, हन्ति समग्रमायुः
> पात्रं करोति सकलस्य च निन्दितस्य।
> प्रेत्यापि नारकसहस्रभुजं पुमांसं
> विप्रोत्तमेषु मनसापि कृतोऽपमानः ॥ -३१

कामक्रोधौ वशे कृत्वा दम्भलोभमनार्जवम् ।
धर्मवन्तस्तु सन्तुष्टाः ते शिष्टाशिष्टसम्मताः । -३२

अर्थः अमानित्वादयः तद्वन्तः, सन्तुष्टाः यथालाभपरितुष्टा-स्ते त एव शिष्टाः, त एव च शिष्टानां परमहंसमुमुक्षुन्धराणां सम्मताः अभिमता इत्यर्थः ।

अकुर्वन्तोऽनसूयन्तः निरहङ्कारमत्सराः ।
ऋजवशिशष्टसम्पन्नाः शिष्टाचारा भवन्ति ते ॥ -३३

शिष्टसम्पन्नाः शिष्टैस्साधकत्वदशायां, सम्पन्नाः सहिताः, शिष्टैराचर्यन्ते, उपचर्यन्ते इति शिष्टाचाराः, शिष्टजनपूज्याः इत्यर्थः ।

विद्यावृद्धास्तु शुचयो वृत्तवन्तो यशस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्ति ते ॥ -३४

सर्वभूतदयावन्तो ह्यहिंसानिरतास्सदा ।
परुषं न प्रभाषन्ते सदा सन्तो द्विजातयः ॥ -३५

यथोक्तसाधनजातस्य फलमुपदर्शयन्नाह —

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ -३६

चित्तस्य प्रसादो नाम ब्रह्माकारवृत्तिविशेषः, तेन । ननु । इदानीं ब्रह्मविदं स्तौति —

क्रोधश्शत्रुश्शरीरस्थः मनुष्याणां द्विजोत्तम ।
यः क्रोधलोभौ त्यजति तं देवा ब्राह्मणं विदुः ॥ -३७

यो वै वदति सत्यानि गुरूंस्सन्तोषयिष्यति ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ -३८

परित्यजन्ति ये दुःखं सुखं वाप्युभयं यतः ।
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ॥ -३९

न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
नाशयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ -४०

अद्रोहस्सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मस्सनातनः ॥ -४१

युधिष्ठिरं प्रति यक्षः —

किन्नु हित्वा प्रियो भवति, किन्नु हित्वा न शोचति ।
किन्नु हित्वार्थवान्भवति किन्नु हित्वा सुखी भवेत् ॥ -४२

युधिष्ठिरः —

मानं हित्वा प्रियो भवति, क्रोधं हित्वा न शोचति ।
कामं हित्वार्थवान्भवति, लोभं हित्वा सुखी भवेत् ॥ -४३

इदानीं ब्रह्मानुभवरूपो धर्मस्वसाधनानि स्वयमेवाह –

अहिंसा संयमः क्षान्तिस्तपश्शौचममत्सरः ।
द्वाराण्येतानि विद्धि हि प्रियाण्यस्य सदा मम ॥ -५४

तपः ऐकाग्र्यं, शौचं कामादिमलक्षालनम् ।

॥ इत्यारण्यपर्वश्लोकाः ॥

विपक्षे दोषमाह विदुरः —

विराटपर्वे द्रौपदीः —

मिथ्याभिलाषी हि नरः कामात्मा मोहमास्थितः ।
अधर्ममयशश्चापि प्राप्नुयाच्च महद्भयम् ॥ -४५

विराटपर्वश्लोकाः —

इदानीं ब्रह्मविदो लक्षणान्युपदर्शयितुमिदमाह —

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
आस्तिकः श्रद्दधानश्च यस्स पण्डित उच्यते ॥ -४६

पण्डा शास्त्रजन्यब्रह्मानुभवः, तद्वान् पण्डितः ।

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिश्च स वै पण्डित उच्यते ॥ -४७

नाप्राप्तमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु न विमुह्यन्ति धीराः पण्डितबुद्धयः ॥ -४८

न प्रहृष्यति सम्माने नावमाने तु तप्यते ।
गङ्गाह्रद इवाक्षोभ्यः यस्स पण्डित उच्यते ॥ -४९

मनोज्ञस्सर्वभूतानां योगज्ञस्सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां यस्स पण्डित उच्यते ॥ -५०

अस्याधिकारिण इदं कर्माण्यनधिकारिण इदमिति सर्वेषां कर्मणां, योगज्ञः विनियोगज्ञः ।

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यस्स पण्डित उच्यते ॥ -५१

महान्तं प्रभूतं, अर्थं निष्कादिकम् । चतुष्षष्टिकलारूपां विद्यां, अणिमाद्यष्टैश्वर्यमेव च । यदृच्छया आसाद्य लब्ध्वापि मिथ्यात्वनिश्चयेन तत्रादराभावादसमुन्नद्धः अहो मम योगप्रभावः द्रष्टव्य इति अहमभिमानशून्यः, यश्चरति स एव पण्डितः इत्यर्थः ।

श्रुतं प्रज्ञानुगं यस्य, प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ -५२

श्रुतं शास्त्रं, प्रज्ञानुगं प्रज्ञानुसारं, प्रज्ञा च शास्त्रानुसारिणी यस्य, सः पण्डिताख्यां नाम, लभेत इत्यन्वयः ।

षट् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ -५३

दीर्घसूत्रता चिरक्रियत्वम् ।

एकैते तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यं अनसूया क्षमा धृतिः ॥ -५४

देवोऽब्रवीत् हंसः —

यतो यतो निवर्तते ततस्ततस्सुखी भवेत् ।
निवर्तनाद्धि सर्वतः न वेत्ति दुःखमण्वपि ॥ -५५

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायतस्सर्वमिह स्पृशन्ति
तस्माद्धीरो नैव शोचेन्न हृष्येत् ॥ -५६

भवाभवौ भवस्संसारो रागद्वेषादिः, तदभावोऽभावः, तौ ।

धृतराष्ट्रं प्रति विदुरः —

अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ताः विचरन्तीह मोक्षिणः ॥ -५७

दानपुण्यं दानात्मकं कर्म, वेदपुण्यं वेदोदितं, अग्निहोत्रादिरूपं कर्म अनाश्रिताः त्यक्तवन्तः ।

अरोषणो यस्समलोष्टकाञ्चनः
प्रक्षीणदोषो गतसन्धिविग्रहः ।

निन्दाप्रशंसोपरतः प्रियाप्रियैः
चरन्नुदासीनवदेष भिक्षुकः ॥ -५८

प्रियाप्रियैस्सह चरन्नपि, आविष्टकत्वेन तत्र गुणदोषबुद्ध्यनुदयात् उदासीनवदेव यस्तिष्ठति, स एव भिक्षुक इत्यर्थः ।

यथोक्तस्य भिक्षोरेव धर्मान्तरमुपदिशन्नाह –

धृतराष्ट्रं प्रति सनत्सुजातः —

तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ।
नैनं मन्येत भूयिष्ठं स बाह्याभ्यन्तरो जनः ॥ -५९

पुत्रकलत्रादिरभ्यन्तरो जनः, इतरो बाह्यजनः । यथैनं, भूयिष्ठं बहुशः न मन्येत न चिन्तयेत्, तथा तेषामगोचर एव वर्तेत इत्यर्थः ।

तस्य कीदृशे देशे वास इत्यत आह -

यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ।
अन्नं पानं च ब्राह्मणः तज्जीवेन्नानुसंज्वरेत् ॥ -६०

यत्र यस्मिन् मृगचोरपीडारहिते देशे, अन्नपानादि भूयिष्ठं बहुलं विद्यत, इति मन्येत, यथा प्रावृषि वर्षाकाले, तृणोदकं बहुलं विद्यते, तद्वत् । तत्र स्थितश्च तदन्नपानादिकमुपजीवन् नानुसंज्वरेन्न तप्तो भवति । अन्यथा, अन्नपानादिरहिते देशे

कथं नाम देहयात्रा सिद्ध्येदिति तप्तो भवति, ततश्च न योगसिद्धिः ।

तत्रापि एवंविधजनसमीपे वास इत्याह —

यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन् स श्रेयान्नेतरो जनः ॥ -६१

यत्र यस्मिन्देशे अकथयमानस्य तूर्णींभूतस्य स्वमाहात्म्य प्रच्छादयतः, जडमूकादिवत्, सञ्चरतः, अशिवमशोभनं, भयम् असमानवित्रासतादि, प्रयच्छति । तथाऽतिरिक्तमिवाकुर्वन् अतिरिक्त ब्राह्मणजातिमात्रप्रयुक्तपूजातिरिक्तं पूजान्तरं ब्रह्मविदनुरूपमकुर्वन्, अवमानादिकमेव कुर्वन् यो जनः सोऽस्य विदुषः श्रेयान्नेतरः ।

कीदृशस्य तस्यान्नं भोज्यमित्यत्राह —

यो वाकथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।
ब्रह्मस्वं नोपहन्याद्वा तदन्नं सम्मतं सताम् ॥ -६२

यो वाकथयमानस्य तूष्णींभूतस्यात्मानं शरीरं नानुसंज्वरेत् न सन्तापयेत् । ब्रह्मस्वं, ब्रह्मनिष्ठसाधनभूतचेलादिकं नोपहन्याद्वा । तथा चोक्तम् —

"कुशवल्कलचेलाद्यं ब्रह्मस्वं योगिनां विदु" रिति ।
तदन्नं तस्यान्नं सम्मतं सतां भोज्यत्वेन ।

पुनरपि तस्यैव समाचारमाह –

नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।
ज्ञातीनां तु वसन्मध्ये नैव विन्देत किञ्चन ॥ -६३

नित्यं नियमेन, अज्ञातचर्या गूढचर्या, मे मम, कर्तव्येति मन्येत, ब्राह्मणो ब्रह्मवित्, ज्ञातीनां पुत्रादीनां, मध्ये सन्निधौ, वसन्नेव विन्देत न प्रतिपद्येत, किञ्चन किञ्चिदपि, । पुत्रादिकं परित्यज्य, केवलं स्वात्मनिष्ठः गूढचर्यैव भवेदित्यर्थः । अथवा, नित्यमज्ञातचर्या, अज्ञाते वागाद्यगोचरे ब्रह्मणि । मन्येत । ज्ञातीनां देहेन्द्रियादीनां मध्ये वसन्, तत्राभिमानं कुर्वन् किञ्चिदपि आत्मतत्त्वं न प्रतिपद्येत, प्रत्युत, तत्तिरस्करोतीति यावत् । ब्राह्मणश्चेत् तथा न करोतीत्याह –

को ह्येवमन्तरात्मानं ब्राह्मणो हन्तुमिच्छति ।
निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥ -६४

निर्लिङ्गत्वादिलक्षणमन्तरात्मानं देहाद्यभिमानेन को वा ब्राह्मणः हन्तुं तिरस्कर्तुमर्हति, न कोऽपीत्यर्थः ।

विपक्षे दोषमाह –

योऽन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते ।
किं ते, न कृतं पापं चोरेणात्मापहारिणा ॥ -६५

अन्यथा, निर्लिङ्गत्वादिरूपेण सन्तमात्मानं अन्यथा, देहाद्यात्मना प्रतिपद्यते, तेन पापं न कृतं किं? सर्वमनेनैव कृतमित्यर्थः ।

इदानीमगूढचारिणः कुत्सयन्नाह –

ये यथा वान्तमश्नन्ति श्वाला नित्यमभूतये ।
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात् ॥ -६६

यथा श्वालाः श्वानः वान्तमुद्गीर्णमश्नन्ति, एवं "वयमेव शिष्टाः ब्रह्मविद" इति स्वमाहात्म्यं ख्यापयन्तः अगूढचारिणो वर्तन्ते, ते वान्तमुद्गीर्णमश्नन्ति । स्ववीर्यस्योपभोजनात् । यदिदं वान्ताशनं तदभूतये अनर्थायैवेत्यर्थः । तस्माद्गूढस्सन्न-शिष्टवदेव समाचरेदिति भावः ।

पुनरपि तस्यैव समाचारमाह –

यमप्रयतमानं तु मानयन्ति स मानितः ।
न मान्यमानो मन्येत नावमानेऽनुसंज्वरेत् ॥ -६७

अप्रयतमानं तूर्णींभूतं गूढचारिणमित्यर्थः ।

किं तर्हि मानिते, न मन्तव्यमित्यत आह –

लोकस्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।
विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ -६८

यदिदं विद्वांसो ब्रह्मविदः मानयन्तीति, तत्तेषां निमेषोन्मेषवत् स्वभाववृत्तिरिति मन्येत ।

अत्रानिते, नैवं मन्तव्यमित्याह –

अधर्मविदुषो मूढा लोकशास्त्रविवर्जिताः ।
न मान्यं मानयिष्यन्तीत्येवं मन्येत मानितः ॥ -६९

इदानीं ब्राह्मणलक्षणमाह —

विद्याद्बहुपठन्तं तु बहुवागिति ब्राह्मणम् ।
स एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ -७०

बहुपठन्तं आख्यानपञ्चमवेदाध्यायिनं ब्राह्मणं, बहुवागिति विद्यात् न साक्षाद्ब्राह्मण इति । कस्तर्हि ? मुख्यो ब्राह्मण इति चेत् स एव सत्यात् सत्यादिलक्षणाद्ब्रह्मणो नापैति न क्षरति चित्सदानन्दाऽद्वितीयब्रह्मरूपेणैवावतिष्ठते । स ब्राह्मणो, नेतर इत्यर्थः ।

यस्मादेवं तस्मात् —

तूष्णींभूत उपासीत न चेच्छेन्मनसा अपि ।
अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ॥ -७१

तूष्णींभूतः स्वव्यतिरिक्तं सर्वं परित्यज्य, केवलो भूत्वा, स्वात्मानमेवोपासीत । मनसा विषयेच्छां न कुर्यात् । यस्त्वेतादृशः अस्मै, ब्रह्मापूर्वादिलक्षणमभ्यावर्तेत, अभिमुखीभवेत् । अनन्तरमाविर्भूतस्वरूपस्सन्, बहु भूमानं तमसः पारं परमात्मानमाप्नुयात् ।

स एव मुनिश्रेष्ठ इत्याह —

मौनाद्धि स मुनिर्भवति नारण्यवासान्मुनिः ।
अक्षरं ब्रह्म यो वेद स मुनिश्रेष्ठ उच्यते ॥ -७२

मौनात् तूर्णींभावात् मुनिर्भवति । नारण्यवासमात्रेण, यस्तु तूर्णींभूतानां मध्ये अक्षरमविनाशि ब्रह्म वेद स मुनिश्रेष्ठ इत्यर्थः ।

॥ इत्युद्योगपर्वश्लोकाः ॥

स एव स्थितप्रज्ञ इत्याह –

अर्जुनं प्रति श्रीभगवान् —

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ -७३

आत्मन्येव प्रत्यगात्मस्वरूप एव आत्मना स्वेनैव तुष्टः बाह्य-लाभनिरपेक्षः ।

किंच,

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ -७४

अनुद्विग्नमनाः अक्षुभितान्तःकरणः ।

यत्सर्वत्राऽनभिस्नेहः तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ -७५

सर्वत्र देहजीवितादिषु ।

विहाय कामान्यस्सर्वान् पुमांश्चरति निस्स्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ -७६

निस्पृहः शरीरजीवनमात्रेऽपि स्पृहारहितः । निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमिति अभिनिवेशवर्जितः । निरहङ्कारः विद्यावत्वादिनिमित्तात्मसम्भावनारहितः । यश्चरति जीवनमात्रचेष्टावशेषः पर्यटति, स एवम्भूतः स्थितप्रज्ञः, शान्तिं सर्वसंसारदुःखोपरमलक्षणां मुक्तिमधिगच्छति, प्राप्नोतीत्यर्थः ।

यस्त्वात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥ -७७

ससाधनं कर्म सन्यस्य शरीरयात्रामात्रचेष्टः ज्ञाननिष्ठो यतिर्मुच्यते - इत्येवमर्थं दर्शयितुमिदमाह –

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शरीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ -७८

यतचित्तात्मा, चित्तं अन्तःकरणं, आत्मा बाह्यकार्यकरणसङ्घातः तावुभावपि संयतौ येन, स तथा । शारीरं शरीरस्थितिमात्रप्रयोजनं केवलम् । तत्राप्यभिमानवर्जितम् ।

ननु त्यक्तसर्वपरिग्रहस्य यतेः कथं देहनिर्वाहः ? इत्याशङ्क्य - "अयाचितमसङ्क्लृप्तमुपपन्नं यदृच्छया" इत्यादिना वचनेन अनुज्ञातान्नोदः प्राप्तिद्वारमाविष्कुर्वन्नाह —

यदृच्छालाभसन्तुष्टः द्वन्द्वातीतो विमत्सरः ।
समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ -७९

यदृच्छालाभस्य सिद्धावसिद्धौ च समः हर्षविषादवर्जितः । शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते । बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वात् ।

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ -८०

विशुद्धात्मा विशुद्धसत्त्वः, विजितात्मा विजितदेहः, सर्वेषां भूतानां आत्मभूतः आत्मा प्रत्यक्चेतनो यस्य स सम्यग्दर्शीत्यर्थः ।

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाऽप्रियम् ।
स्थिरबुद्धिरसम्मूढः ब्रह्मविद्ब्रह्मणि स्थितः ॥ -८१

असम्मूढः सम्मोहविवर्जितः ।

कथम्भूतश्च ब्रह्मणि स्थितः ब्रह्म प्राप्नोतीत्यत्राह -

योऽन्तस्सुखोऽन्तरारामः तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ -८२

अन्तः आत्मन्येव सुखं यस्य सोऽन्तस्सुखः, अन्तः आरमणमाक्रीडा यस्य सः, अन्तर्ज्योतिः प्रकाशो यस्य सः, ईदृशो योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं, जीवन्नेव ब्रह्मभूतस्सन् अधिगच्छति प्राप्नोति ।

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ -८३

**न हृष्यति इष्टप्राप्तौ, न द्वेष्टि अनिष्टप्राप्तौ, न शोचति प्रियविप्रयोगे, अप्राप्तं न काङ्क्षति, शुभाशुभे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी ।**

समः शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥ -८४

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतस्स्थिरमतिः भक्तिमान्मे प्रियो नरः ॥ -८५

मानावमानयोस्तुल्यः तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ -८६

निर्मानमोहा जितसङ्गदोषाः
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः
गच्छन्त्यमूढा पदमव्ययं तत् ॥ -८७

**अध्यात्मनित्याः परमात्मावलोकने नित्यास्तत्पराः ।**

**असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ॥** -८८

नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मान्निष्क्रियः, ब्रह्मात्मबोधात् स निष्कर्मा. तस्य भावः नैष्कर्म्यं, तस्य सिद्धिः निष्पत्तिः ताम् ।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ -८९.

धृत्या धैर्येण, आत्मानं कार्यकारणसङ्घातं, नियम्य वशीकृत्य ।

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ -९०

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममश्शान्तः ब्रह्मभूयाय कल्पते ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । -९१

बलं सामर्थ्यं कामरागयुक्तम् । नैतच्छारीरादिसामर्थ्यम् । स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात् । दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः ।

॥ इत्येते भीष्मपर्वश्लोकाः ॥

इदानीं भक्तिलक्षणां परमहंसचर्यां दर्शयितुमिदमाह —

श्रीकृष्णं प्रति युधिष्ठिरः —

स्रष्टारं सर्वलोकानां परमात्मानमच्युतम् ।
ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति कर्मसु ॥ -९२

पुराणं परमं देवं देवदेवं सनातनम् ।
ये प्रपन्नास्सुरगुरुं न ते मुह्यन्ति कर्हिचित् ॥ -९३

अनादिनिधनं देवं लोककर्तारमव्ययम् ।
प्रपद्यतस्त्वां परमं परा भूतिर्विधीयते ॥ -९४

परा निरतिशया, भूतिः मुक्तिः ।

यं गायन्ति चतुर्वेदाः यश्च वेदेषु गीयते ।
तं प्रपन्नो महात्मानं भूतिमाप्नोत्यनुत्तमाम् ॥ -९५

॥ इत्येते द्रोणपर्वश्लोकाः ॥

इदानीमविवेकिनः कुत्सयन्निदमाह । "गाण्डीवमन्यस्मै देही"ति वदन्तं धर्मपुत्रं जिघांसन्तं अर्जुनं प्रति श्रीकृष्णः –

योऽकार्याणां क्रियायाश्च संयोगं नावबुध्यते ।
कार्याणामक्रियायाश्च स पार्थ, पुरुषाधमः ॥ -९६

क्वचिदकार्यमपि कर्तव्यमेव । क्वचिच्च, कार्यमप्यकर्तव्यमेवेत्येवं विभागं यस्तु न जानाति, स पुरुषाधम इत्यक्षरार्थः ।

अयं न्यायस्सर्वसाधारण इति द्रष्टव्यः ।

नन्वहमेक एवैतादृशः,किमन्योऽप्यस्तीति चेदस्तीत्याह –

अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
एवं स मुह्यत्यवशः यथा त्वं, पार्थ, मुह्यसे ॥ -९७

हे पार्थ, त्वं अनिश्चयज्ञः, कार्याकार्यनिर्णयानभिज्ञः । हि यस्मात् कारणात्, कार्याकार्यविनिर्णयविषये अवशः मुह्यसे, स एवानन्योऽपि नरः मुह्यतीत्यन्वयः ।

तर्हि तत्परिज्ञानं केनेत्यपेक्षायामाहः —

न हि कार्यमकार्यं वा सुखं ज्ञातुं कथञ्चन ।
श्रुतेन ज्ञायते सर्वं हन्त, त्वं नाऽवबुध्यसे ॥ -९८

शास्त्रेण विना, कथञ्चन कथञ्चिदपि, कार्यमकार्यं वा, सुखमनायसेन ज्ञातुं न शक्यते । हि यस्मात्तस्मात् शास्त्रेणैव सर्वं कार्याकार्यविनिर्णयं ज्ञायते, तर्हि अहं शास्त्रं न जानामीति चेत्, हन्त त्वं जानन्नपि मौर्ख्यान्नावबुध्यसे, न जानासीत्यर्थः । अतस्त्वं मदुपदेशान्मौर्ख्यं त्यजेति भावः ।

॥ इति कर्णपर्वश्लोकाः ॥

मौर्ख्यमेव प्रपञ्चयति —

अश्वत्थामानं प्रति कृपः—

अत्यहङ्कृतिमानी च दुरात्मा पापपुरुषः ।
दृष्टमुत्सृज्य कल्याणं करोति बहुपातकम् ॥ -९९

कल्याणं परमात्मानम् ।

तथैव सुहृदोऽप्रज्ञान् कुर्वाणान्कर्म पापकम् ।
प्राज्ञास्स तन्निषेधन्ति यथाशक्ति पुनः पुनः ॥ -१००

तथैव तथापि, प्राज्ञाः, पापकर्म कुर्वाणान् प्रति, "हे जनाः, यूयमात्मज्ञानमेव सम्पादयत । अनर्थहेतुत्वात् तत्पुण्यपापात्मकं कर्म किमपि मा कुरुते"ति यथाशक्ति, पुनःपुनः निषेधन्ति स्म । एतन्निषेधे हेतुस्सुहृद् इति, तत्करणे हेतुरज्ञानिति ।

अशुश्रूषुः सुदुर्मेधाः पुरुषोऽनियतेन्द्रियः ।
नालं वेदयितुं क्रुद्धः धर्मार्थाविति मे मतिः ॥ -१०१

धर्मार्थौ, धर्मः शमदमादिः, तस्यार्थः प्रयोजनमात्मज्ञानं तौ वेदयितुं ज्ञातुं सम्पादयितुं, नालं समर्थो भवतीति शेषः ।

॥ इत्येते शल्यपर्वश्लोकाः ॥

यथोक्तमेवात्मज्ञानं विशदयितुमिदमाह —

युधिष्ठिरं प्रति श्रीकृष्णः —

वेदाहं हि महादेवं तत्त्वेन पुरुषर्षभ ।
अहमस्य पुराणानि कर्माणि विविधान्युत ॥ -१०२

महादेवं, महान् परिपूर्णः, स चासौ देवः, स्वप्रकाशः, तं सच्चिदानन्दपरिपूर्णलक्षणं परमात्मानं, तत्त्वेन आत्मत्वेन, अहं जानामि । हि प्रसिद्धमेतत् । एवं स्वरूपलक्षणमुक्त्वा तटस्थलक्षणमपि वक्तुमिदमाह अहमस्येत्यादिना । कर्माणि जगदुत्पत्तिस्थितिसंहाररूपाणि ।

इदमेव तटस्थलक्षणं स्फुटयति —

आदिरेष हि विश्वस्य मध्यश्चान्तश्च भारत ।
तिष्ठते च जगत्सर्वं ध्रुवमस्यैव कर्मणा ॥ -१०३

तिष्ठते तिष्ठति, कर्मणा सङ्कल्पेन ।

॥ इत्यैषीकपर्वश्लोकौ ॥

एवं जगतो जन्मादिमत्वेन अनित्यत्वमुक्तम् । तदेव प्रपञ्चयति ।

धृतराष्ट्रं प्रति विदुरः —

सर्वे क्षयान्ता निचयाः पतनान्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ताः मरणान्तं च जीवितम् ॥ -१०४

अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
न ते, तव, न तेषां त्वं तत्र का परिदेवना ॥ -१०५

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ -१०६

न कालस्य प्रियः कश्चित् न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ -१०७

मध्यस्थः हितैषी, प्रकर्षति उपसंहरति ।

अनित्यं जीवितं रूपं यौवनं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासः गृद्ध्येत्तेन्न तेषु पण्डितः ॥ -१०८

अनित्यशब्दस्य जीवितादिभिः प्रत्येकं सम्बन्धः द्रष्टव्यः । हि शब्दो हेतौ । हि यस्मात्तस्मादेषु जीवितादिषु न गृद्ध्येत्, गृद्धिनाकाङ्क्षां न कुर्यात् ।

अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसन्निभो लोकः सारो ह्यत्र न विद्यते ॥ -१०९

इदं प्रतीयमानं सर्वं जगत्, जगच्चिन्त्यमानं "प्रपञ्चो मिथ्या दृश्यत्वा"दित्यादियुक्तिभिः पर्यालोच्यमानं, तदशाश्वतं, असत्य भवति । ननु, "अपाम सोमममृता अभूमे"त्यादिश्रुत्या स्वर्गलोकादौ सत्यत्वं प्रतीयत इति चेन्नेत्याह कदली । हि यस्मात्तस्मादत्र, स्वर्गलोकादौ सारः सत्यत्वं, न विद्यते । तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इत्यादिना स्वर्गलोकादावसत्यत्वश्रवणात् । अमृतत्व-श्रुतिरापेक्षिकसत्यत्वपरेति भावः ।

ननु, तर्हि कस्मात् जगत् सत्यत्वेन प्रतीयते इति चेत् आत्मापरिज्ञानादिति ब्रूमः । तदपरिज्ञानं केनेति चेत् काम-क्रोधादिनैवेति वक्तुमिदमाह -

कामक्रोधमदोन्मत्तः नात्मानमवबुध्यते ।
कुलीनत्वे चरन्मत्तः दुष्कुलीनानि कुत्सयन् ॥ -११०

धनदर्पेण दृप्तश्च दरिद्रं परिकुत्सयन् ।
मूर्खा इति परानाह नात्मानं समवेक्षते ॥ -१११

॥ इत्येते स्त्रीपर्वश्लोकाः ॥

तर्हि आत्मज्ञाने वा किं निमित्तं इति चेत् सर्वसङ्ग-परित्यागलक्षणं पारमहंस्यमेवेत्याह –

युधिष्ठिरः —

त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यतः ।
त्यागे यदा कृतमतिः ब्रह्म सम्पद्यते तदा ॥ -११२

"त्यागेनैके अमृतत्वमानशुरि"ति श्रुतिः ।

जन्ममृत्युजराव्याधिवेदनाभिः परिप्लुतम् ।
असारमिममस्वन्तं संसारं त्यजतस्सुखम् ॥ -११३

न केवलं स्थितिकाल एवास्य सारत्वं, अपि मरणकालेऽपीत्याह–

अस्वन्तं, न विद्यते शोभनः अन्तो विनाशः यस्य स तथोक्तम् ।

दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ॥ -११४

भवेन संसारेण । कारणतत्त्ववित् परमात्मतत्त्वज्ञः ।

इत्थं ज्ञानसाधनत्वेन पारमहंस्यमुक्तम् । इदानीं तल्लक्षणान्याह युधिष्ठिरं प्रति नकुलः –

अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः ।
अयाचकस्सदा योगी स त्यागी पार्थ, भिक्षुकः ॥ -११५

परिपतन् परितो गच्छन् ।

इदानीं तस्य वैभवमाह --

प्रज्ञाप्रासादमारुह्य न शोचेत् शोचतो जनान् ।
जगतिस्थानिवाद्रिस्थः मन्दबुद्धिर्नवेक्षते ॥ -११६

जगतिस्थान् पृथिवीस्थान् ।

यथोक्तलक्षणरहितं परमहंसं निन्दति —

बाह्यं द्रव्यं समुत्सृज्य शारीरेषु च गृध्नतः ।
यो धर्मो यत्सुखं वा स्यात् द्विषतां तत्तथास्तु नः ॥ -११७

बाह्यद्रव्यं गृहक्षेत्रवित्तादिरूपं, समुत्सृज्य सन्यस्य, शारीरेषु शरीरस्थितिमात्रप्रयोजनेषु अन्नादिष्वपि, गृध्नतः गृद्धिमाकाङ्क्षां कुर्वतः, परमहंसस्य यो धर्मः यत्सुखं वा स्यात्, स धर्मः तत्सुखं च, नः अस्माकं द्विषतामेवास्तु, नास्माकम् । तथा च तादृशस्य न धर्मः, नापि सुखम् । प्रत्युत, दुःखमेवेति भावः । तर्हि कस्य सुखमित्यपेक्षायामाह –

युधिष्ठरः —

कल्याणगोचरं कृत्वा मनस्तृष्णां निगृह्य च ।
कर्मसङ्गतिमुत्सृज्य स्यान्निरालम्बनस्सुखी ॥ -११८

मनः कल्याणगोचरं, कल्याणं परमानन्दलक्षणं परं ब्रह्म गोचरं तदाकारं कृत्वा यो, निरालम्बनः, शरीरस्थितिमात्रप्रयोजनेऽपि निराकाङ्क्षो भवेत्, स एव सुखी स्यान्नान्य इत्यन्वयः। तत्र मनसः कल्याणगोचरत्वे हेतुः कर्मेति। तत्र हेतुः तृष्णां निगृह्येति।

तथा च श्रुतिः –

"यदहरेव विरजेत्तदहरेव प्रव्रजेत्"
"त्यागेनैकेऽमृतत्वमानशुरि" ति। -११९

पुनः परमहंसलक्षणान्येव प्रपञ्चयति —

भीष्मः —

यं विनिद्रा जितश्वासाः सन्तुष्टास्संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानाः तस्मै योगात्मने नमः॥ -१२०

अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः।
शान्तास्सन्यासिनो यान्ति, तस्मै मोक्षात्मने नमः॥ -१२१

युधिष्ठिरं प्रति भीष्मः –

यत्राऽस्तमितशायी स्यान्निरग्निरनिकेतनः।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो क्षितेन्द्रियः॥ -१२२

निराशीर्निर्नमस्कारः निर्भारो निर्विकारवान्।
विप्रः क्षेमाश्रमं प्राप्तः गच्छत्यक्षरसाम्यताम्॥ -१२३

आत्मोपमस्तु भूतेषु यस्तु भवति मानवः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य लभते सुखम् ॥ -१२४

ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां, दुर्गाण्यतितरन्ति ते ॥ -१२५

**दुर्गाणि, दुःखेनापि गन्तुं ज्ञातुं, सत्वेनासत्वेन वा निर्वक्तुं अशक्यान्यज्ञानतत्कार्याणि ।**

येषां न कश्चित् त्रसति न त्रसन्ति च कस्यचित् ।
येषामात्मसमो लोकः, दुर्गाण्यतितरन्ति ते ॥ -१२६

ये न माननमिच्छन्ति मानयन्ति च ये परान् ।
मान्यमानान्नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ -१२७

यद्यद्ब्रूयादल्पमतिः तत्तत्तस्य सहेत्तदा ।
प्रकृत्या हि प्रशंसन्वा निन्दन्वा किं करिष्यति ॥ -१२७

निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ॥ -१२८

**सेनजितं प्रति ब्राह्मण :-**

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ -१२९

पितृपुत्रसंवादे पितरं प्रति पुत्रः—

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यदेकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ -१३०

ब्राह्मणस्य, ब्रह्मविदस्ततः परमहंसस्य । एतादृशं, एतादृशवित्तं लोके नास्ति । तत् किमित्यपेक्षायामाह - यदित्यादिना । तत्र, एकता अद्वयत्वं भेदवासनाशून्यत्वं वा, समता सर्वत्रावैषम्यं परिपूर्णब्रह्मदृष्टिर्वा, सत्यता, सत्यमनृतानभिवदनं, तदेव तत्ता, स्वार्थे तल्प्रत्ययः । यद्वा, देहातिरिक्तसत्यात्मभावः । शीलं सद्वृत्तिः, स्थितिः स्थैर्यं । दण्डनिधानं, दण्डः निग्रहः, एतदनुग्रहस्योपलक्षणम् । तस्योभयस्यापि, निधानं अन्यत्र स्थापनं, तद्वर्जनमिति यावत् । तथा च गौतमः - "हिंसानुग्रहयोरनारम्भ" इति । आर्जवमृजुभावः, किं बहुना, सर्वव्यापारोपरम एव परमहंसस्य मुख्यो धर्म इत्याह, ततस्ततश्चोपरमः क्रियाभ्य इति ।

ततः किमत आह —

शाम्पाक :—

तं वै सदा कामचरमनुरक्तोर्णशायिनम् ।
बाहूपधानं शाम्यन्तं स्पृहयन्ति दिवौकसः ॥ -१३१

कामचरं स्वेच्छासञ्चारिणम् ।

यस्माद्वेवा विरक्तं स्पृहयन्ति, तस्माद्वेदमाह –

मङ्की —

तस्मान्निर्वेद एवेह गन्तव्यस्सुखमिच्छता ।
सुखं स्वपिति निर्विण्णः निराशश्चार्थसाधने ॥ -१३२

निर्विण्णपदव्याख्यानं, निराशश्चार्थसाधन इति । चशब्दः एव सुखं स्वपिति नान्य इत्यर्थः । तथाचोक्तं "अर्थाना-मार्जने दुःख" मिति ।

इदानीमशेषविषयप्राप्त्यपेक्षया, अशेषविषयत्यागी श्रेयानित्याह –

यः कामान्प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत ।
प्रापणात्सर्वकामानां, परित्यागो विशिष्यते ॥ -१३३

केवलानशेषान् । अत एवाभिन्न इति ।

ब्राह्मणं प्रति प्रह्लादः —

नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन्, न किञ्चिदभिमन्यसे ॥ -१३४

नानुतिष्ठसि धर्मार्थे न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ -१३५

धर्मार्थे, धर्मनिमित्तं कमपि प्रयत्नं नानुतिष्ठसि । न करोषि । अपि च, कामे कामनिमित्तं न वर्तयसे, तदर्थं कमपि विषयं

न सम्पादयसि । "तह्र्यहं कथं वर्ते" इत्यपेक्षायामाह इन्द्रियेत्यादि । साक्षिवदुदासीनवत् ।

किं तव व्रतमिति पृष्टवन्तं प्रह्लादं प्रति ब्राह्मणः --

अचलमनिधनं तथा विशोकं
शुचिमतुलं विदुषां मते निविष्टम् ।
अनभिमतमसेवितं च मूढैः
व्रतमिदमाजगरं शुचिश्चरामि ॥ -१३६

आजगरं व्रतं, अजगरवत् दैवमेव प्रापकमिति धैर्येण तूष्णीमवस्थानम् । शुचिः रागद्वेषादिमलरहितः ।

अचलमतिरविच्युतस्वधर्मः
परिमितसंवरणः परावरज्ञः ।
विगतभयकषायलोभमोहः
व्रतमिदमाजगरं शुचिश्चरामि ॥ -१३७

भीष्मः —

## चूर्णिका

धनकलत्रपरिबर्हसङ्गेष्वात्मनः स्नेहपाशानवधूय परिव्रजन्ति । समलोष्टाश्मकाञ्चनाः त्रिवर्गप्रवृत्तेष्वारम्भेषु असक्तबुद्धयः, अरिमित्रोदासीनेषु तुल्यदर्शनाः, स्थावरजङ्गमानां जरायुजाण्डजस्वेदजोद्भिज्जानां, वाङ्मनःकायकर्मभिरनभिद्रोहिणः, अनिकेतिनः, पर्वतपुलिनवृक्षमूलदेवता-

यतनान्यनुसञ्चरन्तः निवासार्थमुपेयुः । नगरं ग्रामं वा, नगरे पञ्चरात्रिकाः, ग्रामे एकरात्रिकाः, प्रविश्य च प्राणसन्धारणमात्रं द्विजातीनां भवनान्यसङ्कीर्णस्थानान्युपतिष्ठेयुः । पात्रपतितायाचितभैक्षकाः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिणताभिमानहिंसानिवृत्ताः इति ।

तत्र परिवर्हशब्देन पुत्रमित्रादयः परिजना उच्यन्ते । त्रिवर्गार्थं धर्मार्थकामार्थं प्रवृत्तेषु आरम्भेषु गृहादिव्यापारेषु, कामक्रोधादिभिः परिणताभ्यां प्राप्ताभ्यां अभिमानहिंसाभ्यां निवृत्तास्सन्तः, द्विजातीनां भवनानि उपतिष्ठेयुरिति पूर्वेणान्वयः ।

अभयं सर्वभूतेभ्यः दत्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यः भयमुत्पद्यते क्वचित् ॥ -१३८

मोक्षाश्रमं यः कुरुते यथोक्तं
शुचिः स्वसङ्कल्पितबुद्धियुक्तः ।
अनिन्धनज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः ॥ -१३९

स्वसङ्कल्पितबुद्धियुक्तः, सुष्ठु असङ्कल्पिता सङ्कल्पादिरहिता या बुद्धिः तया युक्तः । अत एव शुचिः, रागादिमलनिर्मुक्तः यो द्विजातिः, यथोक्तं शास्त्रप्रतिपाद्यं मोक्षाश्रमं पारमहंस्यं कुरुते स एव, ब्रह्मैव लोकं श्रयते प्राप्नोतीत्यन्वयः ।

किं तत् ब्रह्मरूपं ? को वा तत्र प्राप्त्युपायः ? इति प्रश्ने प्रजापतिं प्रति बृहस्पतिः —

न स्त्री पुमान् नापि नपुंसको वा
न सन्न चासत्सदसच्च यन्नः ।
पश्यन्ति यद्ब्रह्मविदो मनुष्याः
तदक्षरं न क्षरतीति विद्धि ॥ -१४०

न सन्, सीदत्यस्मिन् कार्यजातमिति सच्छब्देन कारणमुच्यते। असत् इति च कार्यम् । अक्षरशब्दं स्वयमेव व्याकरोति, न क्षरतीति । स्वाध्यस्तपञ्चभूततद्धर्मविलक्षणत्वेन ब्रह्मस्वरूपमेव दर्शयन्नाह –

नोष्णं न शीतं मृदुनापि तीक्ष्णं
न तत्कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि न गन्धवच्च
न रूपवत्तत्परमस्वभावः ॥ -१४१

अथ प्राप्त्युपायमाह –

निवर्तयित्वा रसनां रसेभ्यः
घ्राणं च गन्धाच्छ्रवणं च शब्दात् ।
स्पर्शात्तनुं रूपगुणाच्च चक्षुः
ततः परं पश्यति तं स्वभावम् ॥ -१४२

ज्ञानमुत्पद्यते पुंसः क्षयात्पापस्य कर्मणः ।
तदादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ -१४३

प्रसृतैरिन्द्रियैर्दुःखी, तैरेव नियतैस्सुखी ।
तस्मादिन्द्रियचोरेभ्यः रक्षेदात्मानमात्मना ॥ -१४४

सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः ।
मनस्त्वेकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥ -१४५

गुरुशिष्यसंवादे शिष्यं प्रति गुरुः –

योषितां न कथा श्राव्या न निरीक्ष्या निरम्बरा ।
कथञ्चिद्दर्शनादासां दुर्वलानां विशेद्रजः ॥ -१४६

दुर्वलानामनवस्थितचित्तानां पुंसां रजः रागः ।

ज्ञानदण्डपरिक्लेशः परस्मिन् रतिरात्मवान् ।
निष्प्रचारेण मनसा पदं तदधिगच्छति ॥ -१४७

आत्मवान् अप्रमत्तः । निष्प्रचारेण निर्वृत्तिकेन ।

देवतां प्रति जैगीषव्यः —

उक्ताश्च न च वक्ष्यन्ति वक्तारमहिते रतम् ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं ते मनीषिणः ॥ -१४८

येन उक्ताः, दूषितास्सन्तः तं वक्तारं दूषकं न वक्ष्यन्ति न दूषयिष्यन्ति । येन हतास्तं हन्तारं प्रतिहन्तुं नेच्छन्ति ये, त एव मनीषिणः इत्यन्वयः ।

पक्वविद्या महाप्राज्ञाः जितक्रोधा जितेन्द्रियाः ।
मनसा कर्मणा वाचा नापराध्यन्ति कस्यचित् ॥ -१४९

विसृज्य हृदयग्रन्थिं चङ्क्रम्यन्ते यथासुखम् ।
न चैषां बान्धवास्सन्ति ते चान्येषां न बान्धवाः ॥ -१५०

अहं ममाभिमानात्मकं ग्रन्थिं विसृज्य गूढचारिणस्सन्तः यथासुखं, "यो जनान्न परं याति" इति न्यायानुसारेण चङ्क्रम्यन्ते ग्रामाद्ग्रामं गच्छन्ति, नैकत्र तिष्ठन्तीत्यर्थः । एवं च सति एकत्रावस्थानाभावात्, एतेषामन्येषां च परस्परं बन्धुत्वप्रतीत्यभावेन रागद्वेषादिरूपो बन्धो न सम्भवेदित्येतदेवाभिप्रेत्य इदमाह न चैषामित्यादिना । एवमेव सर्वैरपि परमहंसैः वर्तितव्यमित्यनुसन्धेयम् ।

आस्थितस्तं महामार्गमसूयिष्यामि तं कथम् ।
निन्द्यमानः प्रशस्तो वा हृष्येऽहं केन हेतुना ॥ -१५१

तं यथोक्तं महामार्गं, स पारमहंस्यमद्वितीयात्मज्ञानमास्थितः सन्, अन्येन केनचिन्निन्द्यमानोऽपि स्वव्यतिरेकेण वस्त्वन्तराभावात्, कथं केन प्रकारेण, कं वान्यं असूयिष्यामि तथा, प्रशस्तः स्तुतोऽपि केन हेतुनाहं हृष्ये, न केनापीत्यर्थः ।

अमृतस्येव सन्तृप्येदवमानस्य तत्त्ववित् ।
विषयस्येवोद्विजेच्चैव सम्मानस्य विचक्षणः ॥ -१५२

अवज्ञातस्सुखं शेते इह चामुत्र चोभयोः ।
अमुक्तस्सर्वपापेभ्यः योऽवमन्ता स बद्ध्यते ॥ -१५३

कथं नारदः सर्वैः पूज्यत इति प्रश्ने, उग्रसेनं प्रति भगवान् ।

अध्यात्मविधितत्त्वज्ञः क्षान्तश्शान्तो जितेन्द्रियः ।
ऋजुश्च सर्ववादी च तस्माद्भवति पूजितः ॥ -१५४

अध्यात्मविधिभिः वेदान्तवाक्यैः प्रतिपाद्यं यत्तत्वं परं ब्रह्म तदेव आत्मत्वेन जानातीत्यध्यात्मविधितत्त्वज्ञः । सर्वं वक्तुं शीलं अस्येति सर्ववादी, सर्वात्मः स्वतन्त्र इति यावत् ।

समत्वाद्धि प्रियो नास्ति नाप्रियश्च कथञ्चन ।
मनोनुकूलवादी च तस्माद्भवति पूजितः ॥ -१५५

शुकं प्रति व्यासः —

निर्मानश्चानहङ्कारः निर्द्वन्द्वः छिन्नसंशयः ।
नैव क्रुद्ध्यति न द्वेष्टि नानृतं भाषते गिरा ॥ -१५६

आक्रुष्टस्ताडितश्चापि मैत्रीं ध्यायति नाशुभम् ।
समस्सर्वेषु भूतेषु ब्रह्माणमतिवर्तते ॥ -१५७

ब्रह्माणं ब्रह्मलोकस्वामिनं हिरण्यगर्भमतीत्य निर्विशेषपरमानन्दः ब्रह्मात्मना वर्तत इत्यर्थः ।

अलोलुपोऽव्यथो दान्तः नाकृतिर्न निराकृतिः ।
नास्येन्द्रियमनेकाग्रं नातिक्षिप्तमनोरथः ॥ -१५८

न विद्यते आकृतिः, आगच्छेत्याकरणं यस्य स नाकृतिः । न विद्यते निराकृतिः, इतो गच्छेति निराकरणं यस्य स ननिराकृतिः । कदाचिदपि अन्यान् प्रत्यागच्छगच्छेत्येवं न वदेत् ।

तथा चाहाऽत्रिः – "आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा । सम्माननं न ब्रूयात् मुनिर्मोक्षपरायणः" । इति । न विद्यते विषयेष्वत्यन्तं क्षिप्तः स्थापितः मनोरथः यस्य सः, नातिक्षिप्तमनोरथः । अत एवास्य इन्द्रियं मनः, अनेकाग्रं अनेकविषयाकारं न भवतीत्यर्थः ।

अहिंसस्सर्वभूतानां ईदृक्सांख्याद्विद्रजो मुनिः ।
मनीषी मनसा क्षिप्रं पश्यत्यात्मानमात्मनि ॥ -१५९

ईदृक्सांख्यात् अशेषवेदान्तश्रवणाम्, ऐकाग्र्यमापन्नेन मनसा ।

न ह्ययं चक्षुषा दृश्येन्न च सर्वैरपीन्द्रियैः ।
मनसा दीपभूतेन महानात्मा प्रकाशते ॥ -१६०

आत्मनो लक्षणमाह –

अशब्दस्पर्शरूपं तमरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षेत निरीन्द्रियम् ॥ -१६१

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यति भूतात्मा ब्रह्म सम्पद्यते तदा ॥ -१६२

यावानात्मनि मे ह्यात्मा तावानात्मा परात्मसु ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ -१६३

मे आत्मनि, शरीरे ।

सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ -१६४

न विद्यते पदं स्थानं यस्य, तस्य ब्रह्मणः ।

शकुनीनामिवाकाशे जले वारिचरस्य च ।
यथा गतिर्न दृश्येत तथैव सुमहात्मनः ॥ -१६५

तस्यैव सुमहात्मनः महिमानं दर्शयति –

कालः पचति भूतानि सर्वाण्येवात्मनात्मनि ।
यस्मिंस्तु पच्यते कालः तन्न वेदेह कश्चन ॥ १६६

ननु ज्ञानिन एतादृशमहिमा चेत्, किमिति सर्वे ज्ञानं न सम्पादयन्तीत्याशङ्क्य, दोषबाहुल्येन न सम्पादयन्तीति वक्तुं इदमाह –

योगदोषान्समुच्छेद्यान् पञ्चधा कवयो विदुः ।
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ॥ -१६७

क्रोधं शमेन जयति कामं सङ्कल्पवर्जनात् ।
सत्वसंसेवनाद्धीरः निद्रामुच्छेत्तुमर्हति ॥ -१६८

सत्वसंसेवनात् सात्विकाहारात् ।

अप्रमादाद्भयं जह्यात् लोभं प्राज्ञोपसेवनात् ।
एवमेतान्योगदोषान् जयेन्नित्यमतन्द्रितः ॥ -१६९

नाभिजवरेत्परं वाचा मनसा कर्मणा तथा ।
उपेक्षको मिताहारः लब्धालब्धसमो भवेत् ॥ -१७०

नाभिज्वरेत् न सन्तापयेत् ।

यश्चैनमभिनन्देत यश्चैनमभिवादयेत् ।
समस्तयोश्चाप्युभयोः नाभिध्यायेच्छुभाशुभम् ॥ -१७१

एनं परमहंसम् । समस्सन् नाभिध्यायेदित्यन्वयः ।

एवं निर्दुष्टत्वादिसाधनसम्पन्नस्य, अधिकारिणो ब्रह्मज्ञान-मुत्पद्यत इत्याह —

अजं पुराणं परमं सनातनः
यतेन्द्रियैरुपलभ्येत निश्चलैः ।
अणोरणीयो महतां महत्तरं
तदात्मना पश्यति युक्त आत्मवान् ॥ -१७२

कर्मैव ज्ञानसाधनं किं न स्यादित्यत आह –

कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ -१७३

तर्हि कर्मणा वा किं भवेदित्याह —

कर्मणा फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ -१७४

भवाभवौ जन्ममरणे ।

यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ -१७५

तद्याति परमं ब्रह्म पुराणमजरं ध्रुवम् ।
अव्याहतमनायासं अमृतत्वं च विन्दति ॥ -१७६

विद्यया तद्ब्राप्नोतीत्युक्तम् । तत्र किं वा साधनं इत्यपेक्षायां पारमहंस्यमेवेत्याह —

पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते चरेद्भैक्षं कल्पते ब्रह्मभूतये ॥ १७७

निस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
निरग्निरनिकेतस्स्यात् ग्राममन्नार्थमाश्रयेत् ॥ -१७८

कपालं वृक्षमूलानि कुचेलमसहायता ।
उपेक्षा सर्वभूतानां एतावद्भिक्षुलक्षणम् ॥ -१७९

यस्मिन्वाचः प्रणश्यन्ति कूपे प्रास्ता शिला इव ।
वक्तारं न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ -१८०

अयमेव मुख्यो ब्राह्मण इत्याह —

अनुत्तरीयवसनं अनुपस्तीर्णशायिनम् ।
बाहूपधायिनं शान्तं तं देवा ब्राह्मणं विदुः ॥ -१८१

येन केनचिदाच्छिन्नः येन केनचिदाशितः ।
यत्र क्वचन शायी स्यात् तं देवा ब्राह्मणं विदुः ॥ -१८२

कन्थाकौपीनवासास्तु दण्डभृद्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ॥ -१८३

अनाशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ -१८४

अक्षीणमदीनं, क्षीणकर्माणं विधिनिषेधातीतम् ।

अहेरिव रणाद्भीतः सम्मानान्मरणादिव ।
कुणपादिव यस्स्त्रीभ्यः तं देवा ब्राह्मणं विदुः ॥ -१८५

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ -१८६

येन एकेन आकाशं विजनस्थलं, पूर्णमिव भवति, एकाकित्वे सर्वत्र "पूर्णं ब्रह्मे"ति बुद्धेरुदयात् । यस्य जनाकीर्णस्थलं शून्यमिव भवति, जनाकीर्णत्वे तथाविधबुद्धेरनुदयात् । तं ब्राह्मणं विदुरित्यन्वयः ।

न कुप्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदः, तं देवा ब्राह्मणं विदुः ॥ -१८७

विमुक्तं सर्वसङ्गेभ्यः मुनिमाकाशवत्स्थितम् ।
आकाशशरणं शान्तं तं देवा ब्राह्मणं विदुः ॥ -१८८

आसमन्तात् काशते प्रकाशत इत्याकाशं, स्वप्रकाशचिदेकरसं ब्रह्म । तं देवं, शरणं प्राप्यं यस्य तम् ।

इदानीं ब्राह्मणस्य सदाचारमाह –

गन्धान् रसाननुरुध्येत्सुखं वा
नालङ्कारान्प्राप्नुयात्तस्य तस्य ।

मानं च कीर्तिं च यशश्च नेच्छेत्
स वै प्रचारः पश्यतो ब्राह्मणस्य ॥ -१८९

विशोको निर्ममश्शान्तः प्रशान्तात्मविच्छुचिः ।
षड्भिर्लक्षणवानेतैः समग्रं पुनरेष्यति ॥ -१९०

शान्तः, क्रोधादिमलिनवासनारहितः । अत एव प्रशान्तः निरुद्धः, आत्मा मनः यस्य स तथा । समग्रं सम्यगग्रं श्रेष्ठं कैवल्यम् ।

मनसश्चेन्द्रियाणां च मय्यैकाग्र्यं परं तपः ।
तज्ज्यायस्सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ -१९१

गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मसु ।
तदा त्वमात्मनात्मानं परं द्रक्ष्यसि शाश्वतम् ॥ -१९२

गोचरेभ्यः, स्वविषयेभ्यः । इन्द्रियाणीत्यध्याहारः । वेश्मसु, स्वस्वगोलकेषु ।

नानुरुद्धे विरुद्धे वा न द्वेष्मि न च कामये ।
समोऽस्मि सर्वभूतेषु पश्य मेघं जलावृतम् ॥ -१९३

यथा वृद्धातुरकृशा निस्स्पृहा विषयं प्रति ।
तथा कामार्थभोगेषु ममापि विगता स्पृहा ॥ -१९४

यस्मान्नोद्विजते भूतं जातु किञ्चित्कदाचन ।
अभयं सर्वभूतेभ्यः स प्राप्नोति महाव्रते ॥ -१९५

नोद्विजते न बिभेति । जातु कदाचित् ।

तपोभिर्यज्ञदानैर्वा वाक्यैः प्रज्ञाश्रुतैस्तथा ।
नाप्नोत्यभयदानस्य यद्यत्फलमुपाश्नुते ॥ -१९६

अभयदानस्य यद्यत्फलमवाप्यते, तत्तत्फलं तपआदिभिः न प्राप्नोतीत्यन्वयः । प्रज्ञाश्रुतैः प्रज्ञार्थैः, श्रुतैः वाक्यैः वेदान्तवाक्यैः ।

युधिष्ठिरं प्रति भीष्मः —

निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्तास्सर्वपापेभ्यः चरन्ति शुचयोऽमलाः ॥ -१९७

विशोका नष्टरजसः तेषां लोकस्सनातनः ।
तेषां परा गतिः प्राप्या गार्हस्थ्ये किं प्रयोजनम् ॥ -१९८

स्वगृहादभिनिस्सृत्य लाभालाभसमो मुनिः ।
समो दुःखेषु कामेषु निरपेक्षः परिव्रजेत् ॥ -१९९

अभिनिस्सृत्य, अभितो निर्गत्य ।

चक्षुषा मनसा वापि न वाचा दूषयेत्परम् ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत्क्वचित् ॥ -२००

न हिंस्यात्सर्वभूतानि, मैत्रायणगतिं चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ -२०१

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
क्रोध्यमानः प्रियं ब्रूयात् अक्रुष्टः कुशलं वदेत् ॥ -२०२

न चान्नदोषं निन्देत न गुणानभिपूजयेत् ।
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् ॥ -२०३

विविक्ते एव शय्यासने दर्शयति ।

शून्यागारं वृक्षमूलं अरण्यमथवा गुहा ।
अज्ञातचर्यां गत्वा च ततोऽन्यत्र न संविशेत् ॥ -२०४

अनुरोधविरोधाभ्यां समस्स्यादचलो ध्रुवः ।
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि ॥ -२०५

नित्यं तुष्टस्त्वसन्त्रस्तः प्रसन्नवदनेन्द्रियः ।
ध्यानयज्ञपरो मौनी वैराग्यं समुपाश्रितः ॥ -२०६

वाचो वेगं मनसः क्रोधवेगं
विवित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्विजयेद्वै तपस्वी
निन्दा चास्य हृदयं नोपहन्यात् ॥ -२०७

वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातचर्यां लिप्सेत न चैनं हर्ष आविशेत् ॥ -२०८

महात्मा सुव्रतो दान्तः सर्वत्रैवानपाश्रितः ।
अपूर्वाचारकस्सौम्यः ह्यनिकेतस्समाहितः ॥ -२०९

न विद्यते पूर्वाश्रमाचारः यस्य सोऽपूर्वाचारकः। वासनया वा स्वधाकारादिरूपं पूर्वाश्रमाचारं न कुर्यात् । तथा च श्रुतिः-

"न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेत् भिक्षुक" इति। अथवा, अपूर्वानपरत्वादिलक्षणे ब्रह्मणि, आचारः निष्ठा यस्य स तथोक्तः ।

नारदं प्रति सुगमः —

अर्थकामान्परित्यज्य वीतशोको गतज्वरः ।
तृष्णामोहौ तु सन्त्यज्य चरामि पृथिवीमिमाम् ॥ -२१०

गालवं प्रति नारदः —

मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ।
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ॥ -२११

नापृष्टः कस्यचिद्ब्रूयात् न चान्यायेन पृच्छतः ।
जानन्नपि च मेधावी जडवल्लोकमाचरेत् ॥ -२१२

सगरं प्रति अरिष्टनेमिः —

मुक्तलोभभयाल्लोके चरन्ति सुखिनो जनाः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ -२१३

क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्ववान्मुक्त एव सः ॥ -२१४

सत्त्ववान् सत्त्वगुणवान् ।

सम्भवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः ॥ -२१५

मृत्युनाभ्यागतं लोकं व्याधिभिश्चोपपीडितम् ।
प्रवृत्तिकथितं चैव यः पश्यति स मुच्यते ॥ -२१६

छर्दिमूत्रपुरीषाणां दोषाणां सञ्चयं तथा ।
शरीरं दोषबहुलं दृष्ट्वा चेदं विमुच्यते ॥ -२१७

वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ -२१८

प्रतापैरन्वितास्तैः तैः पार्थिवेन्द्रास्सहस्रशः ।
ये गताः पृथिवीं मुक्त्वा इति मत्वा विमुच्यते ॥ -२१९

युधिष्ठिरं प्रति भीष्मः —

यथा चानिमिषास्स्थूलाः जालं भित्वा पुनर्जलम् ।
प्राप्नुवन्ति, तथा योगात् पदवीं यात्यकल्मषाम् ॥ -२२०

अनिमिषा मत्स्याः ।

सुलभां प्रति जनकः —

मुक्तरागश्चराम्येकः पदे परमके स्थितः ।
वैराग्यं पुनरेतस्य मोक्षस्य परमोऽवधिः ॥ -२२१

एतस्य मोक्षस्य जीवन्मुक्तेः परं वैराग्यं परमोवधिः अन्तरङ्ग-साधनमित्यर्थः ।

वैराग्यं द्विविधं, स्रक्चन्दनादिविषयकं, अशेषजगद्व्यापार-विषयकं, चेति । तत्राद्यं परं ज्ञानसाधनम् । द्वितीयं परं ज्ञानसाध्यं जीवन्मुक्तिसाधनं । तदेतदेवाभिप्रेत्य इदमाह --

ज्ञानादेव च वैराग्यं जायते येन मुच्यते ।
सेयं परमिका बुद्धिःप्राप्तानीहावता मया ॥ -२२२

एतदेव वैराग्यं सूत्रमकथयत्पतञ्जलिः -- "तत्परं पुरुषख्यातेः गुणवैतृष्ण्यमिति ।

पुरुषख्यातेः, पुरुषसाक्षात्कारात् अशेषगुणव्यवहारे वैतृष्ण्यं यत्तत्परं वैराग्यमित्यर्थः ।

अथाऽपरं वैराग्यं, तत्साध्यं ज्ञानं च दर्शयितुमिदमाह --

इहैव गतमोहेन चरता मुक्तसङ्गिना ।
ज्ञानं कृतमबीजं मे विषयेषु न जायते ॥ -२२३

मुक्तसङ्गिना, मुक्तः निरस्तसङ्गः विषयेषु, रागः येन तादृशेन मया, अबीजं, ब्रह्मवित्त्वभिमानभोगार्थापादितकामादिरूपवासनार-हितं ज्ञानं, कृतं सम्पादितम् । तथा च वसिष्ठः, "यस्य निर्वासनो बोधः स जीवन्मुक्तः उच्यत" इति । अत एव, मे पुनः विषयेषु रागो न जायते । विषयास्सर्वे मम वश्याः ।

नाहं तेषां वश्य इति भावः । एतदपरवैराग्यमेवासूत्रयत् पतञ्जलिः – "दृष्टानुश्रविकविषये वितृष्णस्य वशीकारसंज्ञा वैराग्यमि" ति । एतदेव प्रपञ्चयितुमिदमाह –

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् ।
वामं वा स्याच्च यस्तक्षेत् समावेतावुभौ मम ॥ -२२४

सुखं सोऽहमवाप्तार्थमलं शमकाञ्चनः ।
मुक्तसङ्गस्स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ -२२५

त्रिदण्डशब्देन, एकदण्डिनः परमहंसा एवोच्यन्ते । तद्धर्मस्यैव मौण्ड्यज्ञानादेरत्र दर्शनात् । तैर्विशिष्टस्समाहितः । ननु, तद्विशिष्टत्वे तत्र किं भवेत् ? तद्धर्मवत्त्वे च मोक्षो भवेदित्याशङ्क्याह —

त्रिदण्डादिना यद्यस्ति मोक्षो ज्ञानेन केनचित् ।
छत्रादिषु कथं न स्यात्तुल्यभेदे परिग्रहे ॥ -२२६

किमर्थं तर्हि शिष्टास्स्वीकुर्वन्तीत्यतः हेतौ आह —

काषायधारणान्मौण्ड्यं त्रिदण्डश्च कमण्डलुः ।
लिङ्गान्यत्रार्थमेतानि न मोक्षायेति मे मतिः ॥ -२२७

"कौपीनदण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहे" दिति श्रुतेरिति भावः । अतो मोक्ष-

मिच्छता, अशेषविषयवैतृष्ण्यपूर्वकमात्मज्ञानमेव सम्पादनीयमिति दर्शयितुमिदमाह -

आकिञ्चन्ये न मोक्षोऽस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये किञ्च तत्त्वे च जन्तुर्ज्ञानेन मुच्यते ॥ -२२८

न विद्यते किञ्चिदपि यस्य सोऽकिञ्चनः । तस्य भावः आकिञ्चन्यं तस्मिन् । तादृशं वैतृष्ण्यं तवास्तीति चेदस्तीत्याह -

राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः ।
मोक्षाश्मनिशितेनेह च्छिन्नस्त्यागासिना मया ॥ -२२९

मोक्षाश्मनिशितेन, नित्यकर्माद्यनुष्ठानेन अशेषपापकसङ्घाद्विमोक्षणमेव मोक्षः, स एवाश्मा तेन निशितेन तीक्ष्णीकृतेन त्यागासिना राज्याद्यशेषविषयसन्त्याग एवासिः सर्वतः परिच्छेदहेतुत्वात्, तेन स्नेहायतनबन्धनः स्नेह एवायतनं, बन्धनं, बन्धनस्थानं यस्य सः, तादृशराज्यैश्वर्यरूपः पाशः मया च्छिन्नः । तत्र ममत्वाभिमानः सर्वात्मना त्यक्त इति यावत् ।

ननु कथं विषयेषु ममत्वाभिमानस्त्यक्तः भवेदित्याशङ्क्य तत्त्यागे साधनं दर्शयन्नाह —

शुकं प्रति व्यासः —

धर्मं पुत्र निषेवस्व सह तीक्ष्णौ हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यमतन्द्रितः ॥ -२३०

धर्मं शमदमादिरूपं । सह प्रसहस्व ।

सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत्परिपालय ॥ -२३१

नृशंसः क्रूरः, स न भवतीत्यनृशंसः, तस्य भावः आनृशंस्यम् ।

शुकं प्रति नारदः —

अदर्शनमसंस्पर्शः तथा सम्भाषणं सदा ।
यस्य भूतैस्सह मुने स श्रेयो विन्दते परम् ॥ -२३२

परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।
अशोकस्थानमातिष्ठ इह चामुत्र चाभयम् ॥ -२३३

गुणसङ्गेष्वनासक्तः एकचर्यारतस्सदा ।
ब्राह्मणो नचिरादेव सुखमायात्यनुत्तमम् ॥ -२३४

विपक्षे दोषमाह –

पुत्रदारकुटुम्बेषु सक्तास्सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ -२३५

तस्मात्

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ -२३६

येन, प्रयत्नविशेषेण । तं प्रयत्नविशेषं त्यज । न चानवस्था, शङ्कनीया । कतकरजोन्यायेन उपपत्तेरिति ।

इदानीं शरीरेऽहंममत्वाभिमाननिवृत्यर्थं तस्य कुत्सितत्वं दर्शयति —

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मानुबद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ -२३७

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासं समुत्सृजेत् ॥ -२३८

भूतावासं शरीरं समुत्सृजेत् । तत्राहंममत्वाभिमानं त्यजेदिति यावत् । एवं परित्यक्तदेहाभिमानस्यैव अधिकारिणः निर्विशेष-ब्रह्मज्ञानेन मुक्तिरिति दर्शयितुमिदमाह —

नारदं प्रति श्रीभगवान् —

अजो नित्यश्शाश्वतश्च निर्गुणो निष्क्रियश्च यः ।
तं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तम ॥ -२३९

तमजत्वादिलक्षणं परमात्मानं, प्रविश्य ज्ञात्वा । पुनस्तस्यैव परमात्मनो लक्षणानि दर्शयितुमिदमाह —

रुद्रं प्रति ब्रह्मा —

शृणु पुत्र यथाह्येकः पुरुषश्शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ -२४०

अशरीरश्शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्येत कर्मभिः ॥ -२४१

ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतो हि न ग्राह्यः केनचित् क्वचित् ॥ -२४२

॥ इत्येते शान्तिपर्वश्लोकाः ॥

इदानीं मध्यमाधिकारिणं प्रति यथोक्तस्यैव परमात्मनो ध्यानं सप्रकारं सफलं च दर्शयितुमिदमाह —

युधिष्ठिरं प्रति भीष्मः —

ओमित्येतं ध्यायमानो न गच्छेत्
दुर्गं पन्थानं पापकर्माऽपि विप्रः ।
सर्वं कृष्णं वासुदेवं हि विप्रः
कृत्वा ध्यानं दुर्गतिं न प्रयान्ति ॥ -२४३

एतं यथोक्तलक्षणं परमात्मानमोमिति ओङ्कारालम्बनत्वेन ध्यायमानः दीर्घकालं नैरन्तर्येण सत्कारैर्ध्यानं कुर्वन् पापकर्मापि विप्रः, सकलपापनिवृत्तिद्वारा अवाप्तपरमात्मसाक्षात्कारो दुर्गं पन्थानं संसारमार्गं न गच्छेन्न प्राप्नोति । किञ्च, प्रथमार्थे द्वितीया । वासुदेवः, सर्वत्र वसति, सर्वमस्मिन् वसतीति वा वासुः । स चासौ देवः स्वप्रकाशः यः श्रीकृष्णः परमात्मा । स एव सर्वमिति ध्यानं कृत्वा । चित्तैकाग्र्यद्वारा समुत्पन्नात्मसाक्षात्कारः, दुर्गतिं संसारगतिं न प्रयान्ति । किन्तु, अद्वितीयपरमानन्दलक्षणां मुक्तिमेव प्राप्नुवन्तीत्यर्थः ।

इदानीं मुख्याधिकारिणं प्रतीदमाह —

गरुडं प्रति श्रीभगवान् —

निरारम्भा निर्नमस्कारा: निराशीर्बन्धनास्तथा ।
गच्छन्ति तं महात्मानं परं ब्रह्म सनातनम् ॥ -२४४

अकामत: स्त्रीदर्शनादौ न दोष इत्यत्र,

शिष्यं प्रति देवशर्मा —

मनोदोषविहीनानां न दोषस्स्यात्तथा तव ।
अन्यथालिंग्यते कान्ता स्नेहेन दुहितान्यथा ॥ -२४५

यतेश्च कामुकानां च योषिद्रूपेऽन्यथा मतिः ।
अशिक्षयैव मनस: प्रायो लोकस्तु वञ्च्यते ॥ -२४६

अविद्वांसं बलाल्लोके विद्वांसमपि वा पुनः ।
नयन्ति ह्युत्पथं नार्य: कामक्रोधवशानुगम् ॥ -२४७

शिष्यान्प्रति पराशर: —

आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधान इति वर्ण्यन्ते शिष्टाश्शास्त्रविनिश्चये ॥ -२४८

वर्ण्यन्ते वर्णयन्तीत्यर्थः ।

एवं स निश्चयं कृत्वा निर्मुच्य गृहबन्धनात् ।
छित्वा भार्यामयं पाशं तथैवासत्यसम्भवम् ॥ -२४९

असत्यसम्भवं असत्यदेहे सम्भवतीति । सम्भवं समुत्पन्नं महत्वाभिमानरूपं च पाशं च छित्वेत्यनुषङ्गः ।

ततः किमत आह —

यतिधर्ममुपाश्रित्य गुरुशुश्रूषणे रतः ।
अचिरेणैव कालेन श्रेयस्समधिगच्छति ॥ -२५०

यतिधर्मानेवाह —

पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
शून्यागारनिकेतश्च वनवृक्षगुहाश्रयः ॥ -२५१

अरण्यानुचरो नित्यं वेदारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित् सज्जते द्विजः ॥ -२५२

वेदारण्यनिकेतनः, वेदस्य शिर एवारण्यमतिगहनत्वात् । तदेव निकेतनं अध्येतव्यत्वेन स्थानं यस्य स तथोक्तः । अथवा, वेदप्रतिपाद्यं ब्रह्मैवारण्यं दुष्प्रवेशत्वात् । तदेव निकेतनमात्मत्वेन प्राप्यस्थानं यस्य स तथोक्तः ।

शीर्णपर्णपुटे वापि हस्ते चरति भिक्षुकः ।
न भोगार्थमनुप्राप्य यात्रामात्रं समश्नुते ॥ -२५३

धर्मलब्धं समश्नाति न कामात्किञ्चिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ॥ -२५४

समो मानावमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरः तथैवाभयसंस्थितः ॥ -२५५

अभये संस्थितः, अभये ब्रह्मणि संस्थितः । ब्रह्मनिष्ठ इति यावत् ।

निर्द्वन्द्वो निर्नमस्कारः निरानन्दपरिग्रहः ।
निर्ममो निरहङ्कारः सर्वभूतनिराश्रयः ॥ -२५६

निरानन्दपरिग्रहः, निर्गतः आनन्दार्थं इन्द्रियप्रीत्यर्थं परिग्रहः यस्मात्स तथोक्तः । आश्रयः, आश्रयत्वं यस्मात्स तथा । सर्वाणि भूतानि यथा नाश्रयेयुः तथा अकिञ्चनस्सन् चरेदिति भावः ।

एवं हि चरमाणस्तु यथा पक्वं फलं तथा ।
स विभज्य स्वकं देहं प्रविशेद्ब्रह्म शाश्वतम् ॥ -२५७

इदमेव ब्रह्मतत्वं विशदयितुं पृच्छति —

सनत्कुमारं प्रति श्रीमहेश्वरः —

कथय त्वमिदं तत्वं देहिनां यतिसत्तम ।
यच्च यत्परमं शुद्धं प्रबुद्धमजरं ध्रुवम् ॥ -२५८

यत्परमं तत्वं तदिदं कथयेत्यन्वयः ।

सनत्कुमारः —

ओमित्येकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
अनादिमध्यपर्यन्तं तटस्थमचलं ध्रुवम् ॥ -२५९

योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्प्रभुम् ।
अनादिनिधनं देवं देवदेवं सनातनम् ॥ -२६०

अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
ज्योतिषां ज्यौतिषं देवं विष्णुमत्यन्तनिर्मलम् ॥ -२६१

ज्योतिरेव ज्यौतिषं, स्वार्थे तद्धितप्रत्ययः ।

नारायणमणीयांसं ईश्वराणामधीश्वरम् ।
विश्वतः परमं नित्यं विश्वं नारायणं प्रभुम् ॥ -२६२

अविज्ञाय निमज्जन्ति लोकास्संसारसागरे ।
यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ॥ -२६३

जन्ममृत्युभयान्मुक्ताः तीर्णास्संसारसागरम् ।
एतत्तत्वमनाद्यन्तं यद्भवाननुपृच्छति ॥ -२६४

अथ परमहंसानामिदमेव तीर्थमिदमेव शौचमिति निर्णेतुं पृच्छति -

युधिष्ठरः —

यत्परं सर्वतीर्थानां तद्ब्रवीहि पितामह ।
यत्र वै परमं शौचं तन्मे व्याख्यातुमर्हसि ॥ -२६५

तत्रादौ तीर्थस्वरूपं दर्शयति भीष्मः —

अगाधे विमले शुद्धे सत्यतीर्थे धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्वमालम्ब्य शाश्वतम् ॥ -२६६

अगाधे दुरवगमे विमले आगन्तुकमलरहिते स्वभावतः शुद्धे, सत्यं अनृतानभिवदनं, तदेव तीर्थं जलं यस्य तस्मिन् । धृतिर्धैर्यमेव ह्रदः यस्य तस्मिन् । मानसं मनोवृत्तिरूपं ज्ञानं, तस्मिंस्तीर्थे, शाश्वतं सत्वगुणमालम्ब्य स्नातव्यं, सर्वैरपि मुमुक्षुभिः ज्ञानतीर्थमेव सेवितव्यमिति भावः । अथ शौचस्वरूपं दर्शयति –

तीर्थशौचं तपोज्ञानं मार्दवं सत्यमार्जवम् ।
अहिंसा संविभागश्च आनृशंस्यं दमश्शमः ॥ -२६८

अधुना ज्ञानिन एव परं तीर्थमित्याह –

निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ।
योगिनस्तीर्थभूतास्ते तीर्थं परमुच्यते ॥ -२६९.

यथोक्ततीर्थशौचेष्वधिकारिणो दर्शयति –

सर्वत्यागेष्वभिरताः सर्वज्ञास्सर्वदर्शनाः ।
शौचेष्वेतेष्वभिरताः ते तीर्थशुचयो मताः ॥ -२७०

अदृष्टेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ -२७१

अथ परमहंसानां भक्तिलक्षणं धर्ममाह –

पुण्डरीकं प्रति नारदः —

नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये संप्रलीयते ॥ -२७२

नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।
परादपि परश्चासौ तस्मान्नास्ति परात्परम् ॥ -२७३

वासुदेवं तथा विष्णुमात्मानं च तथा विदुः ।
संज्ञाभेदैस्स एवैकः सर्वशास्त्राभिसंस्कृतः ॥ -२७४

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ -२७५

तस्मात्त्वं गहनान्सर्वान् त्यक्त्वा शास्त्रार्थविस्तरान् ।
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ॥ -२७६

स्वकर्मशुद्धसत्वानां तपोभिर्निर्मलात्मनाम् ।
विद्यया गतमोहानां तारणाय हरिस्स्मृतः ॥ -२७७

मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः ॥ -२७८

नमो नारायणायेति यो वदेद्ब्रह्म शाश्वतम् ।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ॥ -२७९

श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥ -२८०

लिप्यते न स पापेन नारायणपरायणः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ॥ -२८१

## ॥ अथ वैराग्यलक्षणम् ॥

### ॥ परमहंसधर्मानाह ॥

उमां प्रति महेश्वरः —

मर्त्यस्य किमु तैर्दारैः पुत्रैर्भोगैः प्रियैरपि ।
एकाह्वा सर्वमुत्सृज्य मृत्योस्तु वशमन्वियात् ॥ -१

जायमानांश्च संप्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोऽस्ति चेत्पुंसः काष्ठलोष्टसमो हि सः ॥ -२

संवेगो वैराग्यम् -

ब्राह्मणः क्षत्रियो वापि भूत्वापूर्वं गृहे स्थितः ।
आरण्यं सर्वतः प्राप्य ततस्तान् सन्त्यजेद्गृहान् ॥ -३

वृक्षमूलचरो नित्यं शून्यागारनिकेतनः ।
नदीपुलिनशायी च नदीतीरमनुव्रजन् ॥ -४

विविक्तस्सर्वसङ्गेभ्यः स्नेहबन्धेन वै द्विजः ।
आत्मनैवात्मना भावं समारोप्येहते वने ॥ -५

विविक्तः विमुक्तः। ईहते चरति ।

नैकत्र रमतेऽरक्तः न चैकग्रामगोचारः ।
युक्तोप्यटति योऽयुक्तः न चैकपुलिनाश्रयः ॥ -६

अरक्तः विरक्त इत्यर्थः। अयुक्तः विपर्ययैरसंयुक्तः।

एष मोक्षविदां धर्मः वेदोक्तस्सत्पथेस्थितः।
त्यजेत्सङ्कल्पजान्ग्रन्थीन् सदा ध्यानपरायणः॥ -७

ग्रन्थीन् कामान्। तथा च स्मृतिः —

काम जानामि ते मूलं सङ्कल्पात् किल जायसे॥ इति॥

अनिष्ठुरोऽनहङ्कारः निर्द्वन्द्वो वीतमत्सरः।
वीतशोकभयक्रोधः पदं प्राप्नोत्यनुत्तमम्॥ -८

एवंयुक्तसमाचारस्तत्परोऽध्यात्मचिन्तकः।
ज्ञानाभ्यासेन तेनैव प्राप्नोति परमां गतिम्॥ -९

इदानीं भक्तिलक्षणमेव परमहंसधर्मं विशदयितुं पृच्छति उमा -

कथं परिचरन्त्येते भक्तास्त्वां परमेष्ठिनम्।
आचारः कीदृशस्तेषां केन तुष्टोऽभवद्भवान्॥ -१०

श्रीमहेश्वरः —

हन्त ते कथयिष्यामि मम सायुज्यमद्भुतम्।
येन ते न निवर्तन्ते युक्ताः परमयोगिनः॥ -११

अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः।
सर्वे पाशुपता ज्ञेयाः भस्मदिग्धतनूरुहाः॥ -१२

रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि ।
लिङ्गार्थं चैव भक्तानां भस्म दत्तं मया पुरा ॥ -१३

तेन सन्दिग्धसर्वाङ्गाः भस्मना ब्रह्मचारिणः ।
भैक्षं चरन्तस्सर्वत्र निस्स्पृहा निष्परिग्रहाः ॥ -१४

ब्रह्मचारिणः स्मरणाद्यष्टविधमैथुनवर्जिताः ।

मृत्पात्रहस्ता मद्भक्ताः मन्निवेशितबुद्धयः ।
चरन्तो निखिलं लोकं मम हर्षविवर्धनाः ॥ -१५

एवं नित्याभियुक्तानां मद्भक्तानां तपस्विनाम् ।
उपायं चिन्तयाम्याशु येन मामुपयान्ति ते ॥ -१६

स्थापितं त्रिषु लोकेषु शिवलिङ्गं मया मम ।
नमस्कारेण वा तस्य मुच्यते सर्वकिल्बिषैः ॥ -१७

वा शब्दः एवकारार्थः । नमस्कारेणैव –

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
शिवलिङ्गप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ -१८

मद्भक्ता न विश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तास्सर्वलोकेषु पूजनीया विशेषतः ॥ -१९

॥ इत्येते आनुशासनिकपर्वश्लोकाः ॥

एवं भक्तिलक्षणं परमहंसधर्ममुक्त्वा इदानीं पुनरपि तद्धर्मानेवाह - काश्यपं प्रति सिद्धः —

सर्वमित्रस्सर्वसहः सम एको जितेन्द्रियः ।
व्यपेतभयमन्युश्च कामहा मुच्यते नरः ॥ -२०

नित्यमेव यथान्यायं यश्चरेन्नियतश्शुचिः ।
अमान्यनभिमानश्च सर्वतो मुक्त एव सः ॥ -२१

जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालभौ प्रियद्वेष्यौ वर्तेते यस्य साम्यतः ॥ -२२

किञ्चिन्नानुस्पृहयति नाभिजानाति किञ्चन ।
निर्द्वन्द्वो वीतरागो यः सर्वतो मुक्त एव सः ॥ -२३

अनमित्रो ह्यबन्धुश्च न मित्रो यश्च कस्यचित् ।
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी स उच्यते ॥ -२४

विद्यतेऽमित्रं यस्य सोऽनमित्रः ।

नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः ।
क्षीणधातुः प्रशान्तश्च निर्द्वन्द्वस्स विमुच्यते ॥ -२५

पूर्वमुपचितं सम्पादितं गृहक्षेत्रवित्तादिकं हन्ति त्यजतीति पूर्वोपचितहा । कदाचिदपि तन्न स्मरेदिति भावः ।

अकर्मा भाविकाङ्क्षश्च पश्यञ्जगदशाश्वतम् ।
वैराग्यबुद्धिस्सततं तापदोषव्यपेक्षकः ॥ -२६

यस्मादेकान्त आसीनः तूष्णीं किञ्चिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स निरारम्भको भवेत् ॥ -२७

अगन्धरसमस्पर्शमशब्दमपरिग्रहम् ।
अरूपमपरिज्ञेयं दृष्ट्वाऽऽत्मानं विमुच्यते ॥ -२८

पञ्चभूतगुणैर्हीनममूर्तिमदलेपकम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥ -२९

विहाय सर्वसङ्कल्पान् बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ॥ -३०

विमुक्तस्सर्वसंसारैः ततो ब्रह्म सनातनम् ।
परमाप्नोति वै शान्तः ह्यचलं दिव्यमक्षरम् ॥ -३१

मुनीन्प्रति ब्रह्मा —

प्रवृत्तिलक्षणो योगः ज्ञानं सन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य सन्यसेदिह बुद्धिमान् ॥ -३२

**योगः कर्म ।**

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽपि वा पुनः ।
य इच्छेन्मोक्षमादातुं उत्तमां वृत्तिमाश्रयेत् ॥ -३३

**उत्तमां वृत्तिं पारमहंस्यम् ।**

अभयं सर्वभूतेभ्यः दत्वा नैष्कर्म्यमाचरेत् ।
सर्वभूतहितो मैत्रः सर्वेन्द्रिययतो मुनिः ॥ -३४

अयाचितमसंक्लिप्तमुपपन्नं यदृच्छया ।
जोषयीत सदा भोज्यं ग्रासमागतमस्पृहः ॥ -३५

ग्रासादाच्छादनादन्यं न गृह्णीयात्कथञ्चन ।
यावदाहारयेत्तावत् प्रतिगृह्णीत नान्यथा ॥ -३६

न शिल्पं जीविका जीवेत् द्विरन्नं नैव कारयेत् ।
सर्वेषां नोपदेष्टा च न भवेन्निरुपस्कृतः ॥ -३७

शुद्धभूतानि भुञ्जीत निमित्तानि च वर्जयेत् ।
मृदुवृत्तिरसक्तश्च सर्वभूतैरतन्द्रितः ॥ -३८

न लाभे च प्रहृष्येत नालाभे विमना भवेत् ।
मात्राशी कालमाकाङ्क्षन् चरेद्भैक्षं समाहितः ॥ -३९

शून्यागारमरण्यं वा वृक्षमूलं नदीस्तथा ।
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ॥ -४०

ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।
अध्वा सूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ॥ -४१

दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ।
सञ्चयांश्च न कुर्वीत स्नेहभावं च वर्जयेत् ॥ -४२

न पाणिपादचपलः न नेत्रचपलो मुनिः ।
न च वागङ्गचपलः इति शिष्टस्य गोचरः ॥ -४३

इति एवंप्रकारेण वर्तमानः शिष्टस्य गोचरो विषयो भवतीति शेषः ।

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसङ्ग्रहयुक्तानि नैव कुर्वन्न कारयेत् ॥ -४४

परं नोद्वेजयेत्किञ्चित् न च कस्माच्चिदुद्विजेत् ।
विश्वस्तस्सर्वभूतानां अग्रे मोक्षविदुच्यते ॥ -४५

अनागतं च न ध्यायेत् नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालकाङ्क्षी समाहितः ॥ -४६

न चक्षुषा न मनसा न वाचा दूषयेत्क्वचित् ।
न प्रत्यक्षं परोक्षं वा किञ्चिदुष्णं समाश्रयेत् ॥ -४७

निराशीस्सर्वभूतेषु निरासङ्गो निराश्रयः ।
सर्वज्ञस्सर्वतो मुक्तः मुच्यते नात्र संशयः ॥ -४८

अपाणिपादपृष्ठं तमशिरस्कमनूदरम् ।
अनस्थित्वगसृङ्मज्जामांसमिति च चैव हि ॥ -४९

अचिन्त्यमव्ययं नित्यं कूटस्थमपि नित्यदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ -५०

नित्यदा सर्वदा, न मृता मरणधर्माणो न भवन्ति ।

गूढधर्माश्रितो विद्वान् अज्ञातचरितं चरेत् ।
अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ॥ -५१

यथैनमवमन्येरन् परे सततमेव हि ।
तथा वृत्तं चरेद्धर्मं सतां वर्त्म न दूषयन् ॥ -५२

यो ह्येवं वृत्तसम्पन्नः स मुनिश्रेष्ठ उच्यते ।
क्षीणशोको निरातङ्कः प्राप्नोति परमं पदम् ॥ -५३

निरातङ्कः निश्शङ्कः ।

यो न कामयते किञ्चित् न किञ्चिदवमन्यते ।
इह लोके स एवैष ब्रह्मभूयाय कल्पते ॥ -५४

ब्रह्मस्वरूपमेव निरूपयितुमिदमाह —

युधिष्ठिरं प्रति श्रीभगवान् —

यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर्मद्भक्तैर्दृश्यते यथा ॥ -५५

तर्हि ब्रह्मैतादृशं चेत् कस्तत्त्वमित्यपेक्षायामहमेव ब्रह्म इत्याह -

सर्वभूतात्मभूतस्थः सर्वव्यापी ततोऽस्म्यहम् ।
अचिन्त्योऽहमनन्तोऽहं अजरोऽहमजो ह्यहम् ॥ -५६

अनाद्योऽहमवध्योऽहमप्रमेयोऽहमव्ययः ।
निर्गुणोऽहमगूढात्मा निर्द्वन्द्वो निर्ममो नृप ॥ -५७

निष्कलो निर्विकारोऽहं निधानममृतस्य च ।
यद्भूतं यद्भविष्यच्च तत्सर्वमहमेव हि ॥ -५८

आरण्यकोपनिषदि - "ये तु पश्यन्ति मां द्विजाः ।
निगूढं निष्कलावस्थं तान्प्रयत्नेन पूजयेत्" ॥ इति ॥

॥ इत्याश्वमेधिकपर्वश्लोकाः ॥

तेषामेव लक्षणमाह – भीमसेनं प्रति अर्जुनः –

न स्मरन्त्यपकाराणि स्मरन्ति सुकृतानि च ।
असंभिन्नार्यमर्यादाः साधवः पुरुषोत्तमाः ॥ -५९

॥ इत्याश्रमपर्वश्लोकाः ॥

श्रीकृष्णस्य ब्रह्मस्वरूपत्वादेव दर्शने शोचन्नाह —

व्यासं प्रति अर्जुनः –

पुरुषश्चाप्रमेयश्च शङ्खचक्रगदाधरः ।
चतुर्भुजः पीतवासाः श्यामः पद्मायतेक्षणः ॥ -६०

तमपश्यन्विरक्तोऽस्मि घूर्णामि मुनिसत्तम ।
परिनिर्विण्णचेताश्च शान्तिं नोपलभे मुने ॥ -६१

घूर्णामि भ्रमामि, शोचामीति यावत् । शोकस्य शान्तिं नोपलभे । श्रीकृष्णमात्मत्वेन जानासि चेच्छोकं तरिष्यसि नान्यथेत्यभिप्रायेणोत्तरयति व्यासः –

कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोहयित्वा जगत्सर्वं गतः स्वस्थानमुत्तमम् ॥ -६२

॥ इति मौसलपर्वश्लोकाः ॥

इदानीं भक्त एव श्रेयानिति दर्शयितुमिदमाह —

इन्द्रं प्रति युधिष्ठिरः —

भक्तत्यागं प्राहुरत्यन्तपापं
तुल्यं लोके ब्रह्महत्याकृतेन ।
तस्मान्नाहं जातिकल्पं त्यजेयं
भक्तं श्वानं स्वर्गसुखार्थमिन्द्र ॥ -६३

॥ इति महाप्रस्थानपर्वश्लोकाः ॥

इदानीं सकलाश्रमधर्माणां मुक्तिरेव परमं प्रयोजनं इति दर्शयितुमिदमाह - युधिष्ठिरं प्रति इन्द्रः —

कर्मणां तव पुण्यानां ज्ञानानां तपसां तथा ।
यज्ञानां च महाभाग फलं प्राप्नुहि पाण्डव ॥ -६४

॥ इति स्वर्गपर्वश्लोकाः ॥

श्रीभारतसंवदितां चर्यामार्यैकसेवितामेताम् ।
अनुतिष्ठन्तु यतीन्द्राः कैवल्यानन्दकाङ्क्षिणस्सर्वे ॥ -६५

शान्तो दान्तो विमलः शान्ताशेषैषणो मुनिजनेड्यः ।
अस्ति हि विबुधो यस्तं परमशिवेन्द्रं भजामि निस्तन्द्रम् ॥-६६

॥ भारतसङ्ग्रहस्समाप्तः ॥

## ॥ अथ भागवतसङ्ग्रहः ॥

यस्मिन्नाभाति विश्वश्रीः मराविव तरङ्गिणी ।
तमानन्दघनं वन्दे भगवन्तं जगद्गुरुम् ॥ -१

श्रीमद्भागवते शास्त्रे भक्तिज्ञानादिलक्षणाम् ।
लिखामि परमहंसानां चर्यामार्यजनेडिताम् ॥ -२

तत्रादौ भक्तिलक्षणां परमहंसचर्यां दर्शयितुमिदमाह —

व्यासं प्रति नारदः -

नामान्यनन्तस्य गतत्रपः पठन्
गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्यटंस्तुष्टमना गतस्पृहः
कालं प्रतीक्षन्विमदो विमत्सरः ॥ -३

गतत्रपः त्यक्तलज्जः । विमत्सरो जातोऽस्मीति शेषः ॥

किमर्थं तेषां भक्तिरिति तत्राह —

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहेतुकीं भक्तिं इत्थंभूतगुणो हरिः ॥ -४

निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः । तदुक्तं गीतासु —

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ इति ॥

यद्वा ग्रन्थिरेव ग्रन्थः निवृत्तहृदयग्रन्थय इत्यर्थः। सर्वाक्षेप-परिहारमाह इत्थंभूतेति।

नन्वात्मारामाणां भक्त्यनुवृत्तिवत् किं देहाभिमानानुवृत्तिरपि स्यात्, नेत्याह —

गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः।
अविज्ञातगतिर्जह्यात् स वै धीर उदाहृतः॥ -६

क्व गत इत्यविज्ञाता गतिर्यस्य सः। ननु गृह एव स्थित्वा भक्तिं कर्तुं शक्यते किं परमहंसेनेत्याशङ्क्य, यस्तु भक्तिं कुर्वन् गृहात्प्रव्रजेत् स श्रेयानित्याह –

यस्स्वकात्परतो वेह जातनिर्वेद आत्मवान्।
हृदि कृत्वा हरिं गेहात् प्रव्रजेत्स नरोत्तमः॥ -७

स्वकात् स्वत एव परतः परोपदेशतः। अत एव धीमन्तः प्रव्रजन्तीत्याह – शौनकादीन्प्रति सूतः —

यत्रानुरक्तास्सहसैव धीराः
व्यपोह्य देहादिषु सङ्गमूढम्।
व्रजन्ति तत्पारमहंस्यमन्त्यम्
यस्मिन्नहिंसोपशमस्स्वधर्मः॥ -८

ऊढं धृतम्। अन्त्यं परमकाष्ठापन्नं। तदाह यस्मिन् अहिंसा उपशमश्च स्वाभाविको धर्मः। उपशमस्योपयोगमाह द्वाभ्याम्। परीक्षितं शपन्तं पुत्रं प्रति पिता –

तिरस्कृता विप्रलब्धाः शप्ताःक्षिप्ता हता अपि ।
नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥ -९

तिरस्कृता निन्दिताः, विप्रलब्धा वञ्चिताः, क्षिप्ताः अवज्ञाता हताः ताडिताः । अस्य तिरस्कारादिकर्तुः न तत्प्रतीकारं कुर्वन्ति । तद्भक्ताः विष्णुभक्ताः, प्रभवस्समर्था अपि ।

प्रायशस्साधवो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ -१०

द्वन्द्वेषु सुखदुःखादिषु, अगुणाश्रयः सुखदुःखाद्याश्रयो न भवति ।

पारमहंस्यमेव धर्मं प्रपञ्चयितुं मुनिपुत्रशापेन निर्विण्ण परीक्षितं प्रति शुकागमनं दर्शयति । श्रीसूतः –

तत्राभवद्भगवान्व्यासपुत्रः
यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभेन तुष्टः
वृतश्च बालैरवधूतवेषः ॥ -११

तत्र तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु, यदृच्छया गां पर्यटन् व्यासपुत्रस्तत्राभवत् प्राप्तः । न लक्ष्यमाश्रमादिलिङ्गं यस्य । अवधूतः अवज्ञया जनैस्त्यक्तः, यस्तस्यैव वेषो यस्य ।

तं द्व्यष्टवर्षं सुकुमारपाद-
करोरुबाहुंसकपोलगात्रम् ।

चार्वायताक्षोन्नसतुल्यकर्ण-

सुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ -१२

तमित्यादीनां प्रत्युत्थिता इति तृतीयेनान्वयः । द्विगुणान्यष्टौ वर्षाणि यस्य । चारुणी आयतेऽक्षिणी यस्मिन् । उन्नता नासा यस्मिन् । लम्बत्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन् । यस्मिन् शोभने भ्रुवौ । एवम्भूतं आननं यस्य । कम्बुवत् रेखात्रयाश्रितः, सुष्ठ जातः कण्ठो यस्य ।

निगूढजत्रुं पृथुतुङ्गवक्षसं

आवर्तनाभिं वलिवल्गूदरं च ।

दिगम्बरं वक्त्रविकीर्णकेशं

प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ -१२

कण्ठस्याधोभागयोरस्थिके अस्थिनी, जत्रुणी मांसेन निगूढे जत्रुणी यस्य । वलीभिस्तिर्यङ्निम्नरेखाभिः, वल्गु रम्यं उदरं यस्य । दिश एवाम्बरं यस्य । स्वमरेषु देवेषु उत्तमः श्रीहरिः, तद्वदाभा यस्य ।

श्यामं सदापीच्यवयोऽङ्गलक्ष्या

स्त्रीणां मनोज्ञं रुचिरस्मितेन ।

प्रत्युत्थिता मुनयस्त्वासनेभ्यः

तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ -१३

सदा अपीच्यं अत्यन्तोत्तमं यद्वयो यौवनं, तेन या अङ्ग-लक्ष्मीः देहकान्तिः, तया रुचिरस्मितेन च । गूढवर्चसमपि प्रत्युत्थिता दृष्ट्वा प्रत्युद्गमं कृतवन्त इत्यर्थः ।

स विष्णुरातोऽतिथय आगताय
तस्मै सपर्यां शिरसा जहार ।
ततो निवृत्ता ह्यबुधास्स्त्रियोऽर्भकाः
महासने सोपविवेश पूजितः ॥ -१४

शिरसैव सपर्यामाजहार, आत्मनिवेदनं कृतवान् । तेन सह आगतास्त्र्यादयः, ततो निवृत्ताः । स उपविवेश । सन्धिरार्षः ।

प्रसन्नमासीनमकुण्ठमेधसं
मुनिं नृपो भागवतोऽभ्युपेत्य ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिः
नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥ -१५

न कुण्ठा सर्वार्थेषु, मेधा यस्य । प्रश्नार्थं पुनर्नत्वा । सूनृतां गिरमाह —

राजा —

यच्छ्रोतव्यमथो जप्यं यत्कर्तव्यं नृभिः प्रभो ।
स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ -१६

कर्तव्यं त्वावश्यकमिति भेदः । विपर्ययं अश्रोतव्यादि । त्वद्दर्शनस्य पुनर्दुर्लभत्वादिदानीमेव कथनीयमित्याशयेनाह –

नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् ।
न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ -१७

गोदोहनकालमात्रमपि ।

॥ इति प्रथमस्कन्धस्य सारसङ्ग्रहः ॥

एवं राज्ञा कृतस्या "थो जप्यमि" ति प्रश्नस्योत्तरं वदन्, तत्र सदाचारं प्रमाणयति —

प्रायेण मुनयो राजन् निवृत्ता विधिनिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥ -१८

विधिनिषेधतः विधिनिषेधाभ्यां निवृत्ताः । नैर्गुण्ये ब्रह्मणि स्थिता अपि । स्मेति प्रसिद्धे । अतः परमन्यच्छ्रेयो नास्तीत्याह —

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ -१९

इच्छतां कामिनां । तत्फलसाधनमेतदेव । निर्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां, अकुतोभयं फलम् चैतदेव निर्णीतम् । नात्र प्रमाणं वक्तव्यमित्यर्थः ।

अथ "भजनीयमि" त्यस्य प्रश्नस्योत्तरमाह —

स सर्वधीवृत्त्यनुभूतसर्वः
आत्मा यथा स्वप्नजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत
नान्यत्र सज्जेयत आत्मपातः ॥ -२०

सर्वेषां धीवृत्तिभिरनुभूतं सर्वं येन सः । एकस्य तत्तदिन्द्रियैस्सर्वानुभूतौ दृष्टान्तः स्वप्ने जनानामीक्षिता । यथा स्वप्ने हि कदाचिद्बहून्जीवान् परिकल्प्य जीवः तत्तदिन्द्रियैस्सर्वं पश्यति तद्वदन्यत्र भोगेषु । आत्मपातस्संसारः । तर्हि सर्वथा भोगत्यागे सद्य एव देहपातस्स्यादित्याशङ्क्याह –

अतः कविर्नामसु यावदर्थः
स्यादप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथार्थे न यतेत तत्र
परिश्रमं तत्र समीक्षमाणः ॥ -२१

अतः कविः नाममात्रेषु नाममात्रसारेषु भोगेषु यावदर्थो देहनिर्वाहो यस्य । तथाभूतस्स्यात् । अप्रमत्तः तावन्मात्रेऽपि अनासक्तः । व्यवसायबुद्धिः नेदं सुखमिति निश्चयवान् । तत्रापि तस्मिन्नर्थेऽन्यथैव सिद्धे सति । तत्र यत्ने परिश्रमं पश्यन् , न यतेत । अन्यथासिद्धिमेवाह —

सत्यां क्षितौ, किं कशिपोः प्रयासैः
बाहौ स्वसिद्धे, ह्युपबर्हणैः किम् ।
सत्यञ्जलौ, किं पुरुधाऽन्नपात्र्या
दिग्वल्कलादौ सति, किं दुकूलैः ॥ -२२

कशिपोः शय्यायाः । स्वतस्सिद्धे बाहौ सति उपबर्हणैः उच्छीर्षकैः किम् । पुरुधा बहुप्रकारया अन्नपात्र्या भोजन-पात्रेण । दिक्सद्भावो नाम नग्नत्वमेव । ननु वल्कलमन्नं च याच्ञ्याप्रयत्नं विना कथं प्राप्येत्यत्राह —

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः, सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः, किमजितोऽवति नोपसन्नान्
तस्माद्भजन्ति कवयः धनदुर्मदान्धान् ॥ -२३

चीराणि वस्त्रखण्डानि । परान् बिभ्रति पुष्णन्ति फलादिभिः ये। गुहाः गिरिदर्यः। ननु तेषामलाभे किं कार्यं स्यादत-आह - अजितः हरिः, उपसन्नान् शरणागतान् किं नावति ? न रक्षति किम् ?। किंशब्दस्य पूर्वत्रापि सम्बन्धः । धनेन यो दुर्मदः तेनाऽन्धान् । एवं विरक्तैर्हरिरेव सेव्य इत्याह।

नारदं प्रति ब्रह्मा -

सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमव्ययम् ।
ऋषे ! विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ॥ -२४

क्रमे नारद, प्रशान्तात्मेन्द्रियाशयाः प्रसन्नदेहेन्द्रियमनसः सति वैराग्ये इत्थं भवन्तीति भावः। ननु वैराग्यं वा कथं भवेदित्याशङ्क्य, तत्कृपयैवेत्याह —

एषां स एव भगवान् दययेदनन्तः
सर्वात्मनाश्रितपदो यदि निर्व्यलीकम्।
ते दुस्तरामतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वशृगालभक्ष्ये॥ -२५

दययेत् दयां कुर्यात्। स च यदि निर्व्यलीकं निष्कपटमाश्रितचरणो भवति। देवस्य विष्णोर्दुस्तरां मायां तरन्ति। प्रत्यक्षमेव तेषां मायातितरणमित्याह नैषामिति। श्वशृगालानां भक्ष्ये देहे। किं तद्ब्रह्म [illegible] ? यस्मिन्मनोधारणां विधाय मायां तरतीत्यपेक्षायामाह द्वाभ्याम्।

शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
शुद्धं समं सदसतः परमात्मतत्त्वम्।
शब्दो न यत्र पुरुकारकवान्क्रियार्थः
माया परैत्यभिमुखे च विलज्जमाना॥ -२६

तद्वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।
सम्यङ्नियम्य यतयो यमकर्तहेतिं
जह्युस्स्वराडिव निपानखनित्रमिन्द्रः॥ -२७

यद्ब्रह्मेति विदुर्मुनयः तद्ब्रह्म भगवतः पदं स्वरूपम् ॥ किं तद्ब्रह्म ? तदाह अजस्रं नित्यं च तत्सुखं, विशोकं चेति । तत्र हेतुः, शश्वत् प्रशान्तमित्यादि । ननु तं त्वौपनिषदं पुरुषं पृच्छामीति शब्दबोध्यत्वप्रतीतिः, कुतो बोधरूपत्वं ? तत्राह शब्दो न यत्रेति । आरोपितनिवृत्तावेव शब्दस्य व्यवहारः, न तद्बोधः इत्यर्थः । ननु भवतु नाम निरस्त-भेदज्ञानरूपत्वाद्विशोकत्वम् । सुखस्य तु नानाकारकसाध्य-फलत्वात् कथमजस्रसुखत्वम् ? तस्येत्यत आह यत्र बहुकारक-साध्यक्रियार्थः, उत्पत्त्यादिचतुर्विधक्रियाफलं च नास्ति, इन्द्रियैर्ज्ञानांशाभिव्यक्तिरिव, क्रियाभिरानन्दांशाभिव्यक्तिमात्रं क्रियते । नोत्पत्त्यादिकमिति भावः । ननु उत्पत्त्याद्यभावेऽपि मायामलापकरणेन विकार्यत्वं स्याद्व्रीहीणामिव तुषापकरणेन इत्याशङ्क्याह मायाभिमुखे स्थातुं विलज्जमानेव । यस्मात् परैति दूरतः परिसरति, तस्मादेवंभूते भगवति नियमितमनसां कृतार्थानां कृत्यमस्तीत्याह सहाश्वेति । सध्र्यङ् सहचरं मनः यं प्रति नियम्य, यस्मिन्स्थिरीकृत्य यतयः यत्नशीलाः, कर्त्तः भेदः तन्निरासः अकर्त्तः, तत्र हेतिं साधनं जह्युः त्यजेयुः । अनुपयोगात्तन्नाद्रियन्त इत्यर्थः । उपयोगाभावे साधनानादरे दृष्टान्तः । निर्पीयतेऽस्मिन्निति निपानः कूपः, तस्य खनित्रं खननसाधनं, यथा स्वराट् स्वयमेव पर्जन्यरूपेण विराजमानः इन्द्रो, नादत्ते तद्वदिति । यद्वा, स्वेनैव राजत

इति स्वराट् दरिद्रः, स यथा इन्द्रः समृद्धस्सन्, कर्मकरण-दशायां, गृहीतं निपानखनित्रं जहाति तद्वदित्यर्थः ।

॥ इति द्वितीयस्कन्धसारसङ्ग्रहः ॥

पूर्वं भगवत्स्वरूपमुक्तम् । इदानीं तत्प्रसादेनैव अवाप्त-सकलोपायो भागवतीं गतिं प्राप्नोतीति वक्तुमिदमाह —

विदुरं प्रति मैत्रेयः -

एवं समुदितस्तेन कपिलेन प्रजापतिः ।
प्रदक्षिणीकृत्य सुतं वनमेव जगाम ह ॥ -२८

कपिलेन वनं गच्छेत्येवं समुदितस्सम्यक् उक्तस्सन् सुतं कपिलम्

व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ।
निस्सङ्गो व्यचरत्क्षोणीमनग्निरनिकेतनः ॥ -२९

मनो ब्रह्मणि युञ्जानः यत्तत्सदसतः परम् ।
गुणावभासे विगुणे एकभक्त्यानुभाविते ॥ -३०

निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वस्समदृक् स्वदृक् ।
प्रत्यक् प्रशान्तधीर्धीरः प्रशान्तोर्मिर्महोदधिः ॥ -३१

मुनीनां व्रतं मौनं अहिंसादिलक्षणम् । सदसतः परं यत् तस्मिन् ब्रह्मणि गुणावभासे निर्गुणे, अत एव एकभक्त्या

अव्यभिचारिण्या भक्त्याऽनुभाविनो, अपरोक्षीकृतो, अतो देहादिष्वहङ्काररहितः अत एव निर्द्वन्द्वः शीतोष्णाद्यनाकुलः, सम्यक् भेदाग्रहः, किन्तु स्वदृक् स्वयमेव स्वस्मिन् पश्यन्, प्रत्यक् प्रवणा प्रशान्ता विक्षेपरहिता धीर्यस्य सः । तदेव कल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरप्राप्तिमाह त्रिभिः –

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥ -३२

आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यन् सर्वभूतानि भगवत्यपि चात्मनि ॥ -३३

इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।
भगवद्भक्तियोगेन प्राप्ता भागवतीं गतिम् ॥ -३४

प्रतीच्यो जीवस्यात्मनि, प्रत्यगात्मनि, लब्ध आत्मा चित्तं येन सः । मुक्तं बन्धनमज्ञानं यस्य । लब्धात्मतामाह आत्मानमिति । तदेवं तेन भागवती गतिः प्राप्ता । पाठान्तरे स एवं गतिं प्राप्तः इति । इदानीं भगवत्प्राप्तौ चित्तैकाग्र्यं, सर्वाङ्गनैपुण्यं, तच्च चित्तसंयमाधीनमिति दर्शयन्नाह - देवहूतिं प्रति कपिलः –

चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रक्तं वा पुंसि मुक्तये ॥ -३५

अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वा ।

वा शब्दस्तु शब्दार्थे । फलितं दर्शयति त्रिभिः —

अहंममाभिमानोऽर्थैः कामलोभादिभिर्मलैः ।
वीतं यदा मनश्शुद्धं अदुःखमसुखं समम् ॥ -३६

मलैर्वीतं रहितं, यदा शुद्धं मनो भवति । मनश्शुद्धेर्ज्ञापकमाह अदुःखमिति ।

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयञ्ज्योतिरणिमानमखण्डितम् ॥ -३७

निरन्तरं निर्भेदं, अणिमानं सूक्ष्मम् । अखण्डितमपरिच्छिन्नम् ।

ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चेतसा ।
परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ -३८

हतौजसं क्षीणबलम् । मनश्शुद्धिरेव मुख्यं साधनमित्याह ।

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ -३९

अस्य सर्वस्यापि सत्सङ्ग एव मूलमित्याह —

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ -४०

अपावृतं निरावरणम् । साधूनां लक्षणमाह चतुर्भिः —

तितिक्षवः कारुणिकास्सुहृदस्सर्वदेहिनाम् ।
अजातशत्रवश्शान्ताः साधवस्साधुभूषणाः ॥ -४१

साधवः शास्त्रानुवर्तिनः। साधु शीलं, तदेव भूषणं येषां ते तथा।

मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्।
मत्कृते त्यक्तकर्माणः त्यक्तस्वजनबान्धवाः ॥ -४२

मदाश्रयकथा हृष्टाः शृण्वन्ति कथयन्ति च।
तपन्ति विविधास्तापाः नैतान्मद्गतचेतसः ॥ -४३

तापा आध्यात्मिकादयो न तपन्ति न व्यथयन्ति। कुतः? मद्गतं चेतः येषां तान्।

त एव साधवस्साध्वीसर्वसङ्गविवर्जिताः।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ -४४

ये तापैर्नाभिभूयन्ते ते साधव इत्यर्थः। ततः किमत आह –

आसेवयायं प्रकृतेर्गुणानां
ज्ञानेन वैराग्यविजृम्भितेन।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुन्धे ॥ -४५

तदेवं प्रकृतेर्गुणानां सेवया ज्ञानादिभिर्भक्त्या च अयं जीवः इहैव देहे अवरुन्धे प्राप्नोति। तत्र प्रत्यगात्मानं लक्षयति –

अनादिरात्मा पुरुषः निर्गुणः प्रकृतेः परः।
प्रत्यग्धाम स्वयञ्ज्योतिर्विश्वं येन समन्वितम् ॥ -४६

तमस्मिन्प्रत्यगात्मानं धिया योगविपक्वया ।
भक्त्या विरक्तया ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥ -४७

विविच्य देहाद्युपाधितः पृथक्कृत्य । उपाधितो विवेकमुक्त्वा तस्यैक्यमाह —

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ -४८

भूतेषु चतुर्विधेषु । तदात्मतां महाभूतात्मताम् । यथा तद्वत् । ननु आत्मनः भेदेन प्रतीतेः कथमेकत्वमित्याशङ्क्य, दृष्टान्तेन परिहरति –

स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ।
योनिनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ -४९

स्वयोनिषु काष्ठेषु ज्योतिरग्निः गुणवैषम्याद्दीर्घह्रस्वादिभेदात् । प्रकृतौ देहे ।

तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ।
दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ -५०

स्वांशस्य जीवस्य बन्धहेतुः । दैवीं देवस्य विष्णोश्शक्तिं, पराभाव्य तत्प्रसादेनैव जित्वा, स्वरूपेण ब्रह्मत्वेनावतिष्ठते । प्रकृतिमेव प्रपञ्चयति –

यद्यसद्भिः पथि हृतः शिश्नोदरकृतोद्यमैः ।
आस्थितो रमते जन्तुः तमो विशति पूर्ववत् ॥ -५१

यदि असद्भिः आस्थितोऽधिष्ठितस्सर्वेषां पथि रमते । यद्वा पथि सन्मार्गे आस्थितोऽपि यद्यसद्भिराहृतः अत्यन्तं गृहीतस्सन् तैस्सह रमते तर्हि पूर्वोक्ता असन्त इव नरकं प्रविशन्ति । असत्सङ्गं निन्दति द्वाभ्याम् —

तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ।
सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ -५२

खण्डितात्मसु देहात्मबुद्धिषु । योषितां क्रीडामृगवदीनेषु ।

न तथाऽस्य भवेन्मोहः बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ -५३

यथा च योषित्सङ्गिनां सङ्गो बन्धः, तथाऽन्यप्रसङ्गतः न भवेत् ।

सङ्गं न कुर्यात्प्रमदासु जातु
योगस्य पारम्परमारुरुक्षुः ।
मत्सेवया प्रतिलब्धात्मलाभः
वदन्ति या निरयद्वारमस्य ॥ -५४

अस्य मुमुक्षोः याः प्रमदाः, ताः नरकद्वारं वदन्ति ।

तस्मान्न कार्यस्सन्त्रासो न कार्पण्यं न सम्भ्रमः ।

बुद्ध्वा जीवगतिं धीरः मुक्तसङ्गश्चरेदिह ॥ -५५

यस्मान्न वस्तुनो जीवस्य जन्ममरणादि, तस्मान्मरणात् सन्त्रासो न कार्यः । जीवने च न कार्पण्यं दैन्यं कार्यम् । न सम्भ्रमश्च जीवनप्रयत्ने ।

॥ इति तृतीयस्कन्धसारसङ्ग्रहः ॥

पूर्वं मुमुक्षोः निवृत्तिलक्षणो धर्म उक्तः । इदानीं मुक्तस्य सोऽपि नास्तीति वक्तुं "शिवः किमपि कर्म न करोतीति दूषयन्तं दक्षं प्रति तस्य तदकरणमलङ्कार एवेत्याह दाक्षायणी -

कर्म प्रवृत्तं च निवृत्तमप्यृतं
वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद्यौगपदैककर्तरि
द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥ -५६

यत्प्रवृत्तं अग्निहोत्रादि । निवृत्तं शमदमादि च, ऋतं सत्यमेव । यतः वेदे आश्रितं विहितम् । यच्च विविच्य व्यवस्थयाश्रितम् । न त्वविशेषेण । व्यवस्थामेवाह उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नं, अधिकारी विशेषणम् यस्मिन् तत् । "यावज्जीवमग्निहोत्रं जुहोति, शान्तो दान्त इत्यादिषु नैवं व्यवस्था प्रतीयते"

सत्यम्, तथापि उभयोरेकाधिकारविरोधात् तथा पर्यवस्यतीत्याह। युगपद्भावः यौगपद्यं, तेन यौगपद्येन एकस्मिन्कर्तरि तत्कर्मद्वयं विरोधि। ननु तर्हि निवृत्तं कर्म शिवेनापि कर्तव्यमेव। नेत्याह - ब्रह्मणि सदाशिवे तथोभयलक्षणं किमपि कर्म, नच्छति न प्राप्नोति। अतो यथा प्रवृत्तिनिवृत्त्योः परस्परधर्माकरणे न दोषः। एवमीश्वरे तदुभयकर्माकरणेऽपीति भावः। ननु शिवस्य साक्षात्परमेश्वरत्वात् किमिति त्वया भेददृष्ट्या सोऽवज्ञातः इति भगवानाक्षेप्स्यतीत्याशङ्क्यादौ स्वापराधं परिहरन् भगवन्तं स्तौति दक्षः -

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं
 चिन्मात्रमेकमभयं प्रतिषिध्य मायाम्।
तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यां
 आस्ते भवानपरिशुद्ध इवात्मतन्त्रः॥ -५७

स्वधाम्नि स्वस्वरूपे तिष्ठन्भवान् शुद्धं, चिन्मात्रं चैतन्यमात्रम् चिद्घनः शुद्धत्वे हेतुः। उपरता नित्यनिवृत्ताः अखिला बुद्ध्यवस्था यस्मात्। अतः परं भेदशून्यः, अत एवाभयम्। "द्वितीयाद्वै भयं भवती" ति श्रुतेः। जीवस्यापि वस्तुतः एवंभूतत्वात् वैलक्षण्यार्थत्वमुक्तम्। मायां प्रतिषिध्याभिभूय, स्वतन्त्र एव सन् तया मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य, तस्यां मायायां तिष्ठन् अपरिशुद्ध इव रागादिमानिव आस्ते। रामकृष्णाद्यवतारेषु तथा प्रतीयते भवानित्यर्थः। तस्माद्भवतः

शिष्यस्य च न कोऽपि भेद इति भावः। अतो भवानेवेमां भेददृष्टिं वारयिष्यति। "अहं ब्रह्म च रुद्रश्च जगतः कारणमि"-त्यादिना। भृगुस्तु तत्त्वज्ञानहीना जीवाः। अतोऽज्ञानकृतं मम दुश्चेष्टितं क्षमस्वेत्याह —

या मायया गहनया प्रहृतात्मभावाः
ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः।
नात्मन्श्रितं तव विदन्त्यधुनापि तत्वं
सोऽयं प्रसीदतु भवान्प्रणतात्मबन्धुः॥ -५८

तमसि अज्ञाने। आत्मन्नात्मनि श्रितम्। अनुगतं तव तत्त्वं न विन्दन्ति। प्रणतानामत्मबोधकश्च। ब्रह्मादयोऽपि न विन्दन्तीति भृगुणोक्ते, तदसहमानो ब्रह्मा तत्त्वज्ञानमाविष्कुर्वन्नाह —

नैतत्स्वरूपं भवतोऽसौ पदार्थ-
भेदग्रहैः पुरुषो यावदीक्षेत्।
ज्ञानस्य चार्थस्य गुणस्य चाश्रयो
माया मया व्यतिरिक्तोऽसि तत्त्वम्॥ -५९

पदार्थभेदग्राहकैरिन्द्रियैः। गुणस्येन्द्रियस्य। अहङ्कारख्यामोह-निवृत्तिस्तु त्वत्कथाश्रवणं विना नास्तीत्याहुर्विद्याधराः।

त्वन्माययार्थमभिपद्य कलेबरेऽस्मिन्
कृत्वा ममाऽहमिति दुर्मतिरुत्पथैस्स्वैः।

क्षिप्तोऽप्यसौ विषयलालस आत्ममोहं
युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ॥ -६०

अथ पुरुषार्थसाधनम् । कलेवरमभिपद्य प्राप्य, त्वन्मायया अस्मिन्कलेवरे, ममेति अहमिति अभिमानं कृत्वा, इममात्ममोहं युष्मत्कथामृतनिषेवकः उच्चैः व्युदस्येत् परित्यजेत् नान्यः । ननु स्वैः पुत्रादिभिरधिक्षिप्तो दुःखितस्सन् न परित्यजेदेव । नेत्याहुः । क्षिप्तोऽपि दुर्मतिरसत्सु विषयेष्वेव लालसा तृष्णा यस्य सः । अथेदानीं मातृवचनश्रवणोत्पन्नदुःखमुपशमोपदेशेन निवर्तयितुमाह ध्रुवं प्रति नारदः —

गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ।
मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ -६१

गुणैरधिकात्पुंस इति ल्यब्लोपे पञ्चमी । तं दृष्ट्वा प्रीतिं कुर्यात् न त्वसूयाम् । अनुक्रोशं कृपां लिप्सेन्न तु तिरस्कारम् । समानान्मैत्रीं न तु स्पर्धाम् ।

विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा ।
तं निरन्तरभावेन भजेच्चाथ विमुक्तये ॥ -६२

ये च कामाद्यर्थं भजन्ति तेऽपि मूढा इत्याह ध्रुवः

नूनं विमुष्टमतयस्तव मायया ते
ये त्वा भवाप्ययविमोक्षणमन्यहेतोः ।

अर्चन्ति कल्पकतरुं कुणपोपभोग्य-

मिच्छन्ति यत्स्पर्शजं नरकेऽपि नृणाम् ॥ -६३

अवाप्ययो जननमरणे, तयोर्विमोक्षणहेतुं त्वां, अन्यहेतोः कामाद्यर्थं ये भजन्ते ते नूनं विमुष्टमतयः वञ्चितचित्ताः । यतः ते कल्पतरुं त्वामर्चन्ति । ततः कुणपतुल्येन देहेनोपभोग्यमिच्छन्ति । न चेच्छायोग्यं, तदित्याह - यत्स्पर्शजं विषयसम्बन्धजन्यं सुखं, तन्नरकेऽपि भवति । ननु ममापि सोपाध्यायजीवात् को विशेष इत्यत आह —

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा

कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।

यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या

द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ -६४

त्वं तु व्यतिरिक्तः जीवविलक्षणः आस्से तिष्ठसि । वैलक्षण्य-मेवाह त्वं तु नित्यमुक्तः, जीवस्तु त्वत्प्रसादान्मुच्यते । त्वं परिशुद्धः, स तु मलिनः । त्वं विशुद्धः सर्वज्ञः, स तु किञ्चि-द्ज्ञः । त्वमात्मा स तु जन्तुः । त्वं कूटस्थः, स तु विकारी । त्वमादिपुरुषः, स त्वादिमान् । त्वं भगवान्, स तु भगहीनः । त्वं त्रयाणां गुणानां अधीशः, स तु तत्परतन्त्रः । कुतस्तद्वैलक्षण्यं ? यत् यतः बुद्ध्यवस्थितिं बुद्धेस्तां तामवस्थामखण्डितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा पश्यसि ।

तथाभूत एव त्वं स्थितौ पालने अधिमखः यज्ञाधिष्ठाता विष्णुः। तमेव ब्रह्मरूपेण ज्ञातं नमस्करोति -

यस्मिन्विशुद्धगतयो ह्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्यं
आनन्दमात्रमविकारमहं प्रपद्ये ॥ -६५

पतन्ति अस्मादुद्भवन्ति। विश्वस्य भवः यस्मात्। एकमखण्डित-माद्यमनादिः यः। प्रपत्तेः फलमाह मैत्रेयः -

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ -६६

नमन्ति अनुसरन्ति। इदमेवाह ध्रुवं प्रति स्वायम्भुवः —

तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु ।
समत्वेन च सर्वात्मा भगवान्संप्रसीदति ॥ -६७

महत्सु तितिक्षया, नीचेषु करुणया, समेषु मैत्र्या, अखिलेषु जन्तुषु समत्वेन। ततः कृतार्थो भवतीत्याह —

सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ।
विमुक्तो जीवनिर्मुक्तः ब्रह्म निर्वाणमृच्छति ॥ -६८

प्रसन्ने सति, गुणैर्विमुक्तः, अत एव जीवेन लिङ्गशरीरेण विमुक्तस्सन् निर्वाणं सुखात्मत्वं ब्रह्म प्राप्नोति। अतस्त्वेनन्मम किमायातमित्यत्राह –

ममैवमङ्गात्मनि मुक्तविग्रहे
व्यपाश्रितं निर्गुणमेकमक्षरम् ।
आत्मानमन्विच्छ विमुक्तमात्मदृक्
यस्मिन्निदंभेदमसत्प्रतीयते ॥ -६९

हे अङ्ग ध्रुव, आत्मनि व्यपाश्रितं, आत्मदृक् प्रत्यक्दृष्टिस्सन् अन्विच्छ अवलोकय । इदंभेदं अयं भेदः, यस्मिन्, तदिदंभेदं विश्वमेव असदेव। स्वस्मिन्प्रतीयते तम्। तदन्वेषणफलमाह —

त्वं प्रत्यगात्मनि तदा भगवत्यनन्त
आनन्दमात्र उपसन्न समस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढम् ॥ -७०

अथ ध्रुवस्य पुत्रोऽपि अत्यन्तकृतार्थ इत्याह मैत्रेयः –

ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ।
सार्वभौमश्रियं नैच्छत् अधिराजासनं पितुः ॥ -७१

पितुस्सार्वभौमश्रियमधिराजासनं च नैच्छत् । अनिच्छायां हेतुमाह चतुर्भिः —

स जन्मनोपशान्तात्मा निस्सङ्गस्समदर्शनः ।
ददर्श लोके विततमात्मानं लोकं आत्मनि ॥ -७२

आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ।
अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ -७३

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ।
स्वरूपमवरुन्धानो नान्यदन्यस्तदैक्षत ॥ -७४

जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ।
लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ -७५

अवबोधरसेन एकात्म्यं तादात्म्यं स्यात् । आत्मानं स्वरूपभूतं ब्रह्मावरुन्धानं आप्नुयात् । आत्मनोऽन्यत्तन्नैक्षत । स्वयं तु सर्वस्मादन्यस्सन् । स कथंभूतं ? अव्यवच्छिन्नः यो योगः स एवाग्निः, तेन दग्धः कर्ममलः यस्य, सः आशयो यस्य सः । जडानामिव आकृतिर्यस्य सः । तथाभूतो लक्षितः, अतन्मतिः न तेषामिव मतिर्यस्य । सर्वज्ञत्वात् प्रशान्तानि अर्चींषि ज्वालाः यस्यानलस्य, तद्वत्स्थितः । उपादेयेष्वपि गुणेषु भूतद्रोहाभावरूपो गुणः श्रेयानित्याह पृथुं प्रति श्रीभगवान् —

सुधियस्साधवो लोके नरदेवनरोत्तमाः ।

नाभिद्रुह्यन्ति भूतेभ्यः यर्हि नात्मा कलेवरम् ॥ -७६

यर्हि यस्मात् कलेवरमनात्मा न भवति तस्माद्भूतानि नाभि-द्रुह्यन्ति तथापि पुत्रादिष्वासक्तस्य सम भूतद्रोहो भवेत्तत्राह --

असंसक्तशरीरेऽस्मिन् अमुनोत्पादिते गृहे ।

अपत्ये द्रविणे चापि कः कुर्यान्ममतां बुधः ॥ -७७

प्रतिबोधक्रमं विवृण्वन् देहानुषङ्गाभावमाह द्वाभ्याम् —

एकश्शुद्धस्स्वयञ्ज्योतिः निर्गुणोऽसौ गुणाश्रयः ।

सर्वगोऽनावृतस्साक्षी निरात्मा नात्मनः परः ॥ -७८

निरात्मा देहरहितः, तत्र हेतुः अनात्मनो देहात् परो भिन्नः ।

स एवं सततमात्मानं आत्मस्थं वेद पूरुषः ।

नाज्यते प्रकृतिस्थोऽपि तद्गुणैस्समधिष्ठितः ॥ -७९

आत्मस्थं देहस्थम् । स्वदेहे स्थितोऽपि तद्विकारैर्न लिप्यते । यतस्समधि ब्रह्मणि स्थितः । इयमवस्था कस्योत्पद्यत इत्यपेक्षा-यामाह चतुर्भिः —

स्वधर्मेण समान्नित्यं निराशीः श्रद्धयान्वितः ।

भजते शनकैस्तस्य मनो राजन्प्रसीदति ॥ -८०

परित्यक्तगुणस्सम्यक्दर्शनो विशदाशयः ।

शान्ति मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ -८१

योहि यदा विशदाशयः प्रसन्नमनाः, तदा परित्यक्तगुणस्सन् सम्यग्दर्शनो भूत्वा शान्तिमश्नुते । शान्तिमेवाह - मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यमश्नुते । सम्यग्दर्शनमेवाह ---

उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ -८२

देहज्ञानकर्मेन्द्रियमनसां अध्यक्षमिव स्थितमात्मानं यो वेद । संसारिणः कूटस्थत्वं कथमत आह –

भिन्नस्य लिङ्गस्य गुणप्रवाहो
द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्टासु सम्पत्सु विपत्सु सूरयः
न विक्रियन्ते मयि बद्धसौहृदाः ॥ -८३

भिन्नस्य लिङ्गस्य गुणप्रवाहस्संसारः । भिन्नत्वे हेतुमाह द्रव्येति । तत्र चेतना चिदाभास इत्यर्थः । अतो दृष्टासु प्राप्तासु सम्पत्सु विपत्सु च हर्षशोकादिभिर्न विक्रियन्ते, विकारं न प्राप्नुवन्ति । बहिर्वैराग्यमात्मनिरतिश्च, न च ततोऽधिकं साधनान्तरमस्ति शास्त्रेषु । तयोरेव मोक्षसाधनत्वनिश्चयादित्याह पृथुं प्रति सनत्कुमारः —

शास्त्रेष्वेतावान्सुनिश्चितो नृणां
क्षेमस्य सद्ध्र्यङ्ग् विमृशेषु हेतुः ।

असङ्ग आत्मव्यतिरिक्त आत्मनि
दृढा रतिर्निर्गुणे ब्रह्मणि च या ॥ -८४

सद्भ्यश्च विमृशेषु शास्त्रेष्वेतावानेव सुनिश्चितः । कोऽसौ ? आत्मव्यतिरिक्तः, असङ्गः वैराग्यं, आत्मनि च रतिः । आत्मनः विशेषणं निर्गुणे ब्रह्मणि । नन्वेतदिति दुर्लभमित्याशङ्क्य उत्तमाधिकारिणः श्रवणमात्रेण भवति । अन्यस्य तु चित्तशुद्ध्यनुसारेण तारतम्यतो वर्धमानया भक्त्यैव भवतीत्याह चतुर्भिः ।

सा श्रद्धया भगवद्धर्मचर्यया
जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं
पुण्यश्रवःकथया पुण्यया च ॥ -८५

सा ब्रह्मणि रतिः असङ्गश्च श्रद्धयादिभिस्स्यादिति । चतुर्थोन्वयः जिज्ञासया तद्विशेषबुभुत्सया । पुण्यं श्रवः यस्य, तस्य हरेः पुण्यया कथया च ।

अर्थेन्द्रियारामसगोष्ठितृष्णया
तत्सम्मतानामपरिग्रहेण ।
विविक्तरुच्या परितोष आत्मन्
विना हरेर्गुणपीयूषपानात् ॥ -८६

अर्थाः कामाः अर्थनिष्ठास्तामसाः । इन्द्रियारामाः कामनिष्ठाः राजसाः । तैस्सह या गोष्ठी तस्यास्तृष्णया । तेषां ये

सम्मताः अर्थाः कामाश्च, तेषामपरिग्रहेण । विविक्ते निर्जने या रुचिस्तया । आत्मन्येव परितोषे च सति, सा स्यात् । किन्तु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्ते रुचिर्न कार्या, न चात्मनि परितोषः कार्य इत्यर्थः ।

अहिंसया पारमहंसचर्यया स्मृत्या
मुकुन्दचरिताग्र्यसीधुना यमैरकामैः ।
अनिन्दया निरीहया योगक्षेमार्थक्रिया-
राहित्येन शीतोष्णादिद्वन्द्वसहनेन ॥ -८७

कथयेत्यत्र उक्तमपि कथनं भक्तावन्तरङ्गत्वेन पुनरुच्यते ।

हरेर्मुहुस्तत्परकर्णपूर-
गुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्गस्सदसत्यनात्मनि
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ -८८

तत्पराः हरिभक्ताः, तेषां कर्णपूराः कर्णालङ्कारभूताः ये हरेः गुणाः, तेषामभिधानेन । सदसति, कार्यकारणभूते भगवतोऽन्यत्रा-सङ्गः, । आत्मनि रतिश्च । ततः किमित्यत आह –

यदा रतिर्ब्रह्मणि नैष्ठिकी पुमान्
आचार्यवान् ज्ञानविरागरंहसा ।
दहत्यवीर्यं हृदयं जीवकोशं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ -८९

यदा निष्ठां प्राप्ता रतिर्भवति, तदाऽऽचार्यवान्सः ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वासनं द्वन्द्वतितिक्षया च पारमहंस्यचर्यया उपशमादिप्रधानया श्रुत्या आत्महितानुसन्धानेन मुकुन्दचरितसेवाग्र्यं शीधुः श्रेष्ठं अमृतं, तच्चरितस्मृतिसुखेनेत्यर्थः। मार्गान्तरस्यानिन्दया निरीहया सज्जीवस्य कोशमात्रात्मकं हृदयं, पुमान्दहति। कथंभूतं? पञ्चभूतप्रधानं यद्वा अविद्यास्मितरागद्वेषाभिनिवेशाः पञ्च, तदात्मकम्। उत्थितः ज्वलितोऽग्निः योनिमरणिमिव। ततः किमत आह —

दग्धाशयो मुक्तसमस्ततद्गुणः
नैवात्मनो बहिरन्तर्विचष्टे।
परात्मनोर्यद्व्यवधानं पुरस्तात्
स्वप्ने यथा पुरुषस्तद्विनाशे॥ -९०

दग्ध आशयो हृदयमुपाधिर्यस्य। अत एव, मुक्तास्समस्ताः तद्गुणाः कर्तृत्वादयो येन। आत्मनस्सकाशात् बहिर्घटादिः, अन्तस्सुखादि, नैव विचष्टे न पश्यत्येव। कुत इत्यपेक्षायां दृष्टदृश्यप्रतीतेरन्तःकरणहेतुत्वादित्याह - परो दृश्यः, आत्मा द्रष्टा तयोर्व्यवधानं भेदकं पूर्वमासीत्। तस्य विनाशे सति, यथा स्वप्ने राजाहमित्यारोपितसैन्यादिद्रष्टारं दृश्यं सैन्यं च, स्वप्नावस्थानाशे न पश्यति तद्वद्दृश्यभेदम्। दृश्यासक्तिस्त्याज्येत्याह -

न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीर्षकः ।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥ -९१

तमस्संसारं तत्तुल्यवद्व्यपदेशात् । पुरुषार्थसाम्यभ्रान्तिं वारयति —

तत्रापि मोक्ष एवार्थः आत्यन्तिक य इष्यते ।
त्रैवर्गोऽर्थो यतोऽनित्यः कृतान्तभयसंयुतः ॥ -९२

विपक्षे दोषमाह नारदं प्रति प्राचीनबर्हिः —

गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ।
नापरं विन्दते मूढः भ्राम्यत्संसारवर्त्मसु ॥ -९३

गृहेषु स्थितः, पुत्रादिष्वेव पुरुपार्थधीर्यस्य सः । अतः संसारासक्तिं त्यक्त्वा मुमुक्षुः, परमहंसः, परमानन्दब्रह्मापरोक्षज्ञानं सम्पादयेदिति घट्टार्थः ॥

॥ इति चतुर्थस्कन्धसारसङ्ग्रहः ॥

पूर्वं विरक्तस्य मुमुक्षोः मोक्षसाधनभूतमपरोक्षज्ञानमुक्तम् । इदानीं मुक्तस्य कृतकृत्यत्वात् किं देहधारणेनेत्याशङ्क्य, प्रारब्धभोगस्य देहधारणसक्तत्वात् तद्धारणमुचितमित्याह प्रियव्रतं प्रति ब्रह्मा —

मुक्तोऽपि तावद्बिभृयात्
प्रारब्धमश्नन्नभिमानशून्यः ।

यथानुभूतं प्रतियातनिद्रः
किन्त्वन्यदेहाय गुणान्न वृङ्क्ते ॥ -९४

यावत्प्रारब्धं कर्म तावद्यथा स्वप्नेऽनुभूतं, प्रतियातनिद्रः गतनिद्रः, अभिमानशून्यः, अतो मोक्षमिच्छत्येवानुसरति । भोगवासनया पुनर्जन्म भवेत् । तत्राह - किन्तु देहारम्भकान् गुणान्कर्माणि वासनाश्च न वृङ्क्ते न भजते । ननु गृहे वर्तमानस्य भोगान्भुञ्जानस्य अभिमानो भावो मोक्षो वा कुतः ? अतस्तत्यागेन वनवास एव युक्तः । तत्राह –

भयं प्रमत्तस्य वनेष्वपि स्यात्
यतस्स आस्ते सहषट्सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किन्तु करोत्यवद्यम् ॥ -९५

भयं संसारः, स्यादेव प्रमत्तस्याजितेन्द्रियस्य, वनेष्वपीति सङ्गभिया वनाद्वनान्तरं गच्छतोऽपीत्यर्थः। सहैव षट् सपत्नाः शत्रवो मनोबुद्धीन्द्रियाणि, यस्य सः । तथाभूत एव वनेष्वपि यत आस्ते । बुधत्वेन जितेन्द्रियत्वादात्मारामस्य । अवद्यं रागादि दोषम् । ननु गृहे रागादयस्संभवन्ति न तु वने इत्याशङ्क्याह –

यष्षट्सपत्नान्विजिगीषमाणो
गृहेषु निर्विश्य यतेत पूर्वम् ।

अत्येति दुर्गाश्रित ऊर्जितारीन्
क्षीणेषु कामं विचरेद्विपश्चित् ॥ -९६

यो विजिगीषमाणः स पूर्वं गृहे स्थित्वा तेषामत्यन्तनिरोध-मकुर्वन् जेतुं यतेत । क्षीणेष्वरिषु काममन्यत्र विचरेत् । यतो लोके ऊर्जितारीन् दुर्गाश्रित एवात्येति, पश्चात् सुखं वर्तते । एवं विरक्तस्यैव पारमहंस्येऽधिकार इत्युक्तमिममेवार्थं प्रपञ्चयितु-माह श्रीशुकः —

"एतेषां कविर्महावीरस्सवन इत्यत्र आसन्नूर्ध्वरेतसः अत-आत्मविद्यायामर्भभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥

तस्मिन्नुभावाव उपशमशीलाः परमर्षयः सकलजीवनिकाया-वासस्य भगवतो वासुदेवस्य भवभीतशरणभूतस्य श्रीमच्चरणारविन्दा-विरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यगात्मन्येव, आत्मतादात्म्यमविशेषेण समीयुः ॥"

प्रियव्रतस्य, अग्नीद्ध्र इध्मं जिह्वया जिह्वाहुरित्याद्याः अग्नि-नामानो दश पुत्राः । एतेषां मध्ये त्रयः अर्भभावादारभ्य, बाल्यादारभ्य, तस्मिन्पारमहंस्याश्रमे, श्रीमच्चरणारविन्दयोरविरतस्मर-णेन । अविगलितः अखण्डितः परमभक्तियोगः, तस्यानुभावेन विशोधितेऽन्तःकरणे प्रतीतो यो भगवान्, तस्मिन्नात्मनः त्वंपदार्थस्य तादात्म्यमविशेषः, देहाद्युपाधिः तदपोहेन प्रापुः ।

भगवत्प्राप्तौ वैराग्यमेव मुख्यं साधनमिति दर्शयितुमिदमाह पुत्रान्प्रति ऋषभः —

नायं देहो देहभाजान्नृलोके
कष्टान्कामानर्हति विड्भुजां ये ।
तपो दिव्यं ह्यर्हो येन सत्यं
शुद्ध्येद्यस्माद्ब्रह्मसुखं ह्यनन्तम् ॥ -९७

विड्भुजामपि ये सन्ति तान्कष्टान् दुःखदान्कामान् विषयान् नार्हति । तद्योग्योऽयं मनुष्यदेहो न भवति । दिव्यं देवस्य विष्णोराराधनरूपं, येन तपसा, यस्माच्छुद्धात् सत्वादनन्तरं ब्रह्म सुखं भवति । मोक्षबन्धयोर्निदानमाह –

महत्सेवां द्वारमाहुर्विमुक्तेः
तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ताः
विमन्यवस्सुहृदस्साधवो ये ॥ -९८

तमसस्संसारस्यास्य द्वारम् । योषितां ये सङ्गिनः, तेषां सङ्गमं । महतां लक्षणमाह महान्त इति । साधवस्सदाचाराः । न केवलं योषित्सङ्गी सङ्गमात्रं, अनर्थान्तरमप्यस्तीत्याह —

यथा न पश्यत्ययथागुणेहां
स्वार्थे प्रमत्तस्सहसा विपश्चित् ।

गतस्मृतिस्तत्र विन्दति तापान्
आसाद्य मैथुन्यमगारमज्ञः ॥ -९९

यथा गुणानामिन्द्रियाणां, ईहां चेष्टां, अयथा मिथ्या आत्मीया न भवतीति। विपश्चित् विवेकी सन् न पश्यति तत्र तथा सह-सागतस्मृतिः स्वरूपस्मृतिः। शून्यस्सन् अतोऽज्ञो मूढः, मिथुन-सुखप्रधानं गृहं प्राप्य तापान्विन्दति। ननु यथोपयोगं स्त्रियां मिथुनीभूय सुखमात्रमनुभवतः, कुतस्तापास्स्युः ? तत्राह –

पुंसस्स्त्रिया मिथुनीभावमेतं
तयोर्मिथो हृदयग्रन्थिमाहुः ।
अतो गृहक्षेत्रे सुताप्तवित्तैः
जनस्य मोहोऽयमहं ममेति ॥ -१००

प्रत्येकं तयोरेकैकशः हृदयग्रन्थिरस्त्येव । एतन्मिथस्स्थूलमन्यं हृदययोर्ग्रन्थिं दुर्भेदं वदन्ति। कुत इत्यत आह - अतः अस्मान्मिथुनी-भावात् प्रत्येकं हृदयग्रन्थीनां देहेन्द्रियमात्रे अहंममेति मोहः। अस्मात्तु गृहादिभिर्विषयभूतैर्महामोहो भवेदित्यर्थः । अथ ऋषभचर्यामाह श्रीशुकः –

"स एवमनुशास्यात्मजान् स्वयमनुशिष्टानपि लोकाननुशासनार्थं महानुभावः परमसुहृत् भगवान् ऋषभापदेशः उपशमशीलानामुपरत-कर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यं धर्ममुपशिक्षमाणः स्वतनयशतं, ज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं, धरणीतल-

परिपालनाय अभिषिच्य, स्वयं भवनतः उर्वरीकृतशरीरमात्रपरिग्रहः उन्मत्त इव गगनपरीधानः प्रकीर्णकेशः आत्मन्यारोपिताहवनीयः ब्रह्मावर्तात्प्रवव्राज । जडान्धमूकबधिरपिशाचोन्मत्तार्भकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां, गृहीतमौनव्रतः तूष्णीं बभूव ।

स्वत एवानुशिक्षितानपि लोकाननुशासनार्थं अनुशास्यं धर्ममुपशिक्षयिष्यन् भरतमभिषिच्य, ऋषभ इति अपदेशो नाम यस्य सः, भगवान्ब्रह्मावर्तात्स्वदेशात् प्रवव्राजेन्वयः । उर्वरीकृतोऽवशिष्टः शरीरमात्रपरिग्रहः यस्य सः । अभिभाष्यमाणोऽपि जनानां मध्ये जडादिवद्वर्तमानः तूष्णीं बभूव ।

"तत्र पुरग्रामदुर्गाकरकेटवाटशिबिरव्रजघोषसार्धगिरिवनाश्रमादिषु अनुपथमवनिचरापशदैः परिभूयमानो, मक्षिकाभिरिव वनगजः, तर्जनताडनावमेहननिष्ठीवनग्रावशकृद्रजःप्रक्षेपणपूतिवातदुरुक्तः, तदविगणयन्नेवासत्संस्थाने एतस्मिन्देहोपलक्षणे सदपदेशमात्रः उभयानुभवस्वरूपस्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वात् अखण्डितमनाः पृथिवीमेकचरः परिबभ्राम ।"

तत्र पुरादिषु, अनुपथं मार्गे मार्गे, अवनिचरापशदैः दुर्जनैः, तर्जनादिभिः परिभूयमानोऽपि, तदविगणयन्नेव, एकचरः एकाकी सन् पृथिवीं परिबभ्रामेत्यन्वयः । तत्र पुरं पट्टणं, ग्रामो हट्टहीनः, आकारः खनिः, केटः, कृषीवलग्रामः, वाटः पुष्पवाटिका, शिबिरं सेनाया आवासः, स्थानं, व्रजः गवां स्थानं,

घोषः गोपालानां स्थानं, सार्थो यात्रिकजनसङ्घातः, आश्रमः ऋषीणाम्। तर्जनं भर्जनं, ताडनं, प्रहारं, मेहनमुपरि मूत्रणं, निष्ठीवनं फूत्कृत्य श्लेष्मप्रक्षेपः, ग्राव्णां शकृतो रजसश्च प्रक्षेपः, पूतिवातोऽधो वायुः, दुरुक्तः शापः, एतैर्गणने दृष्टान्तो मक्षिकादिभिरिवेति। तत्रैव हेतुः असति मिथ्याभूते, संस्थाने सन्निवेशे, देह इत्युपलक्षणम्। आकारो यस्य, सदित्यपदेशमात्रं यस्य, तस्मिन् निरभिमानत्वात्। केन हेतुना? उभयोस्सदसदोः, योऽनुभवः, तत्स्वरूपेण, यत्स्वमहिमावस्थानं तेन। अत एव अखण्डितं मनः यस्य सः, परिबभ्राम।

"अतिसुकुमारकरचरणोरुःस्थविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुन्दरस्वभावहाससुमुखः नवनलिनदलायमानशिशिरतरारुणायमानरुचिरसदृशसुभगकपोलकर्णनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागावलम्बमानकुटिलजटिलकपिशकेशभूरिहारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत"

"यर्हि वाव स भगवान् लोकमिमं योगस्य प्रतिपक्षमाचक्षाणः तत्प्रतिक्रियाकर्मबीभत्सितमिति व्रतमाजगरमास्थितः यान एवाश्नाति, पिबति, खादत्यवमेहति, हन्तति स्म॥"

एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनश्शयानः, काकमृगगोवच्चरितः। पिबति, खादति, अवमेहति स्म। यर्हि यदा

लोकं जनं, योगस्य प्रतिपक्षमाचक्षाणः, तदा आजगरव्रत-मास्थितः, शयान एवाश्नाति स्मेत्यन्वयः। आजगरव्रतं नाम एकत्र स्थित्वा प्रारब्धकर्मोपभोगः, अवमेहति मूत्रयति, हन्तति पुरीषमुत्सृजति। एवं गवादिचर्यया पानादि करोति स्म। तदेवाह व्रजन्नित्यादि। काकमृगगवामिव अन्यदपि चरितं वृत्तिर्यस्य सः।

"इति नानायोगचर्याचरणो भगवान् कैवल्यपतिः ऋषभोऽविरत-परममहानन्दानुभवः आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेवे आत्मनोऽव्यवधानेन अनन्तरोदरभावेन स्वसिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशनदूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा राजन् हृदयेनाभ्यनन्दत्"

नाना योगचर्या आचरतीति तथा, लोकयात्रादिपरिहाराय योगिभिरेवं वर्तितव्यमिति प्रदर्शनाय। तथा कृतवान्। वस्तुतस्तु, भगवान् यतः अविरतः परं महानुत्तरोत्तरशतगुणत्वेन उक्तः य आनन्दः तदनुभवस्वरूपः। किञ्च, वासुदेवो, आत्मनोऽव्यव-धानेन अभेदेन। न विद्यतेऽन्येषामिवान्तरा मध्ये उदरस्य-देहोपाधेः भावः। तेन नित्यनिवृत्तोपाधित्वेनेत्यर्थः। स्वत-एव सिद्धैस्समस्तैरर्थैः परिपूर्णत्वात् योगैश्वर्याणि नाभ्यनन्दत्। वैहायसं खेचरत्वं, मनोजवः मनस इव देहस्य वेगं, दूरग्रहणं दूरदर्शनं। हे नृप, हृदयेन मनसा।

"अथैवमखिललोकपाललामोऽपि विलक्षणैर्जडवदवधूतवेषो भाषाचरितैरलक्षितभगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन्, स्वकलेवरजिहासुरात्मन्यात्मानं असंव्यवहितमनर्थान्तरभावेनान्वीक्षमाणः उपरतानुवृत्तिरुपरराम ।"

अखिलानां लोकपालानां ललामो मण्डनभूतोऽपि । उपरता बाधिता विषयानुवृत्तिर्यस्मात् । उपरराम देहाभिमानं जहौ । विलक्षणैरनेकप्रकारैरवधूतवेषादिभिः । न लक्षितो भगवत्प्रभावो यस्मिन् सः । साम्परायविधिं देहत्यागप्रकारम् । आधाराधेयभावव्यावृत्यर्थमाह अनर्थान्तरभावेन अभेदेन, उपासनाव्यावृत्यर्थमाह असंव्यवहितम् ।

"तस्य ह वाव एवं विमुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनया देहमिमां जगतीमभिमानाभासेन चङ्क्रममाण एकदा कोङ्कवङ्ककुटकादीन् दक्षिणकर्णाटकान् देशान् यदृच्छयोपगतः कुटकाचलोपवने आस्ये कृताश्मकवलो उन्मत्त इव मुक्तमूर्धजोऽसंवीत एव विचचार । अथ समीरवेगविधूतवेणुसङ्घर्षणजातोग्रदावानलः तद्वदालेलिहानः सह तेन ददाह ।"

मनसा स्वयं त्यक्तेऽभिमाने केनापि संस्कारेण देहः प्रचलति । यथा कुलालचक्रम् । सोऽयमभिमानाभासः । तेन च जीवन्मुक्तो नाविद्यावासनया भवतीति । ततो

विशेषमाह योगमायावसानयेति । कोङ्कादीन्देशान्गतस्सन् कयापि वासनया, कृतोऽश्मनि कवलो येन, असंवीतो नग्नः, समीरवेगेन विधूतानां कम्पितानां, वेणूनां सङ्घर्षेण जातः उग्रः दावानलः, आलेलिहानः सर्वतो ग्रसन् । अथेदानीं जडभरतस्य चरितमाह --

"अथ कस्यचित द्विजवरस्याङ्गिरसप्रवरस्य, शमदमस्वाध्यायाध्य-यनत्यागसन्तोषतितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानन्दयुक्तस्य, आत्मसदृशश्रुत-शीलाचारौदार्यगुणा नव सोदरा अङ्गजा बभूवुः । मिथुनं च । यवीयस्यां भार्यायां, यस्तु तत्र, पुमांसः तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रतां गतमाहुः ।"

आङ्गिरसगोत्रजानां प्रवरस्य श्रेष्ठस्य, शमदमादियुक्तस्य, त्यागो नामाऽत्र अतिथिभ्योऽन्नदानादि । विद्या कर्मविद्या ज्ञानं देहादिव्यतिरिक्तभोक्त्रात्मज्ञानं, आनन्दो धर्मसम्पत्तिः, आत्मनः सदृशाः श्रुतादयो गुणा येषां ते । यवीयस्यां कनिष्ठायां च । मिथुनं स्त्रीपुंसयुग्मं । उत्सृष्टं मृगशरीरं येन तम् ।

"तत्रापि स्वजनसङ्गाच्च भ्रंशमाशङ्कमानो भगवतः कर्मबन्ध-विध्वंसनश्रवणस्मरणगुणविवरणाचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतिघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिः, आत्मानमुन्मत्त-जडबधिरस्वरूपेण दर्शयामास ।"

लोकस्य तत्रापि च, अन्यजनसङ्गादिव, स्वजनसङ्गाच्च, आत्मनो भ्रंशमाशङ्कमानो, उन्मत्तादिरूपेण दर्शयाभासेत्यन्वयः। किं किं कुर्वन्? कर्मबन्धविध्वंसनं श्रवणं, स्मरणं, गुणानां विवरणं यस्य तत्। भगवतश्चरणारविन्दयुगलम्। मनसा विशेषेण धारयतः आत्मनः। प्रतिघातशङ्काया हेतुः अनुस्मृता स्वीयानां पूर्वजन्मनामावलिः परम्परा येन सः।

"स च प्राकृतैर्द्विपदपशुभिः, उन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते, कर्माणि च कार्यमाणमपरेच्छया करोति, विष्टितो वेतनतो वा याञ्चया वा यदृच्छयोपसादितमल्पं बहुमृष्टं कदन्नं वाभ्यवहरति, परं नेन्द्रियप्रीतिनिमित्तं नित्यनिवृत्त-निमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमस्सुखदुःखयोर्द्वन्द्वनिमित्तयोः असम्भावितदेहाभिमानः शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीन-स्संहननाङ्गः, स्थण्डिलसंवेशनोऽनुन्मर्दनामज्जनरजसा महामणिरिव अनभि-व्यक्तब्रह्मवर्चसः, कुपटावृतकटिः, उपवीतेनोरुमर्पिणा द्विजातिरिति ब्रह्म-बन्धुरिति संज्ञेन याज्ञजनावमतो विचचार"

यदाऽभिभाष्यमाणः तदनुरूपाणि अभिभाषते, मूल्य-मन्तरेण बलाद्यत्कर्म कार्यते सा विष्टिः वेतनं मूल्यम्। विष्ट्यादिभिरुपसादितमन्नमभ्यवहरति। परं भुङ्क्ते केवलं, नतिवन्द्रियप्रीतये। तत्र हेतुद्वयमाह, नित्यं सदा निवृत्तं

यस्मात् । उत्पादकशून्यः, स्वसिद्धः अभिव्यञ्जकशून्यः विशुद्धः केवलोऽनुभवः, स एवानन्दस्वरूपः स्वात्मा, तस्य लाभः, एवम्भूतोऽहमिति ज्ञानं, तस्याधिगमः प्राप्तिर्यस्य सः। द्वन्द्वानि सम्मानावमानादीनि, तद्धेतुकयोः सुखदुःखयोः अकृतदेहाभिमानः। तस्मान्नेद्रियप्रीतिनिमित्तं अभ्यवहरति अत एव शीतोष्णादिष्वनावृताङ्गो विचचारेत्यन्वयः। कीदृशः? पीनः, पुष्टः संहननाङ्गः संहन्यन्ते निविडीभवन्ति स्वाङ्गानि यस्य सः, कठिनावयवइत्यर्थः। स्थण्डिलसंवेशनं भूशयनं, अनुन्मर्दनं मर्दनाभावः, अमज्जनं स्नानाभावः, तैर्यद्रजः, तेनाप्रकटं ब्रह्मवर्चसं ब्राह्मं तेजो यस्य सः। यथा रजसावृतो महामणिः अनभिव्यक्ततेजो भवति। कुत्सितेन कपटेन आवृता कटिर्यस्य। उरुमर्षिणा मलिनेन। एवं जलवच्चरन्तं ब्राह्मणं प्रथमतोऽवज्ञाय, पश्चात् ब्रह्मविदिति ज्ञात्वा विशेषजिज्ञासया पृच्छति रहूगणः।

तद्ब्रुह्यसङ्गो जडवन्निगूढ-
 विज्ञानवीर्यो विचरस्यपारः।
वचांसि योगग्रथितानि साधो
 न नः क्षमन्ते मनसापि भेत्तुम्॥ -१०१

निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन। अपारः अनन्तमहिमा। तत्र हेतुः मनः, मनसापि हेतुं न क्षमं न शक्यम्। किं हेतुमित्यपेक्षायामाह तव वचांसीति। यद्वा

मनसा युक्ताः सूक्ष्मदृष्टयोऽपि भेत्तुं न शक्नुवन्तीत्यर्थः । स्वस्य ज्ञातार्थतां दर्शयति —

अहं च योगेश्वरमात्मतत्त्व-
विदां मुनीनां प्रवरं गुरुं वै ।
(प्र)द्रष्टुं, प्रवृत्तः किमिहारणं यत्
साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥ -१०२

इह संसारे यदरणं शरणं तत् किमिति प्रष्टुं प्रवृत्तोऽस्मि । ज्ञानशक्त्यावतीर्णं कपिलम् ।

स वै भवाल्लँोकनिरीक्षणार्थं
अव्यक्तलिङ्गो विचरत्यपि स्वित् ।
योगेश्वराणां गतिमन्दबुद्धिः
कथं विचक्षीत गृहानुबन्धः ॥ -१०३

स एव भवान् किं स्वित् एवं विचरति । गृहाविष्टः कथं विचक्षीत पश्येत् ।

तन्मे भवान्नरदेवाभिमान-
मदेन कृच्छ्रीकृतसत्तमस्य ।
कृषीष्ट मैत्रीं दृशमात्मबन्धो
यथा तरेत्सदवज्ञानमंहः ॥ -१०४

तत्तस्मात्, कृच्छ्रीकृताः तिरस्कृताः सत्तमाः भवादृशा यस्य । तस्य मे मैत्रीं दृशं स्नेहयुक्तां दृष्टिं, कृपीष्ट करोतु । सतामवज्ञानरूपं अंहः पापं, यया तरिष्यामि । ब्राह्मणः।–

अकोविदः कोविदवादवादान्
वदस्यथो नात्मविदां वरिष्ठः ।
न सूरयो हि व्यवहारमेतं
तत्वामर्शेन सहामनन्ति ॥ -१०५

अकोविदः अविद्वानपि, त्वं कोविदानां वादाः उद्ग्रहणीकस्त-त्तुल्यान्वादान् वदसि । अथोक्तः, आत्मविदां तत्त्वज्ञानिनां मध्ये श्रेष्ठो न भवसि। कुतः? हि यस्मात्, त्वं स्वामि-भृत्यादिलौकिकव्यवहारं सत्यमात्थ। एनं एवंविधं पुरुषं, सूरयः तत्त्वामर्शेन तत्त्वविदा सह नामनन्ति न वदन्ति। किन्तु, अविचारसुन्दर इति वदन्ति। स्वामिभृत्यव्यवहारस्य तदुक्तां सत्यतां निराकर्तुं तस्य मनोनिमित्ततामाह –

यावन्मनो रजसा पुरुषस्य
सत्त्वे न वा तमसा वानुरुद्धम् ।
चेतोभिराकूतिभिरातनोति
निरङ्कुशं कुशलं चेतरं वा ॥ -१०६

मनो यावद्रजआदिभिर्गुणैरनुबद्धं, वशीकृतं भवति, तावन्मनो निरङ्कुशं सत्पुरुषस्य कुशलं धर्ममितरधर्मं वा तनोति

तैश्चेतोभिर्ज्ञानेन्द्रियैः, आकृतिभिः कर्मेन्द्रियैश्च । तदेव धर्मादियुक्तं तदनुरूपं फलं च करोतीत्याह —

दुःखं सुखं व्यतिरिक्तं च तीव्रं
कालोपपन्नं फलमाव्यनक्ति ।
आलिंग्य मायारचितान्तरात्मा
स्वदेहिनं संसृतिचक्रकूटः ॥ -१०७

व्यतिरिक्तं मिश्रं मोहं च, तीव्रं दुर्निवारकं, कालप्राप्तं फलं सर्वतो व्यनक्ति सृजति । ननु जडः कथं सृजति ? तत्राह स्वदेहिनमालिंग्य आलिङ्गने कारणमाह मायया रचितः अन्तरात्मा जीवोपाधिः । उपाधितामाह संसृतिचक्रं कूटयति चलयति तथा यथा ग्रामकूट इति । ननु कथमेकमेव विलक्षणकार्यकारीत्याशङ्क्यावस्थाभेदादित्याह —

गुणानुरक्तं व्यसनाय जन्तोः
क्षेमाय नैर्गुण्यमथो मनस्स्यात् ।
यथा प्रदीपो घृतवर्तिमश्नन्
शिखाः सधूमा भवति ह्यन्यथा स्वम् ॥ -१०८

नैर्गुण्यं निर्गुणं कार्त्स्न्येन दृष्टान्तेन स्पष्टयति यथेति । अन्यथा व्रतक्षये, स्वपदं शुक्लभास्वररूपं महाभूतात्मत्वं वा । यावद्विषयानुरक्तं मन एवानर्थहेतुरिति न वेद तावन्निर्वेदाभावात् परिभ्रम एवेत्याह —

न यावदेतन्मन आत्मलिङ्गं
संसारतापावपनं जनस्य ।
यच्छोकमोहामयरागलोभ-
वैरानुबन्धं ममतां विधत्ते ॥ -१०९

आत्मनो लिङ्गमुपाधिभूतं मनः संसारतापावपनं क्षेत्रं यावन्न वेद तावद्भ्रमतीत्यध्याहारः । तापावपनत्वे हेतुः यावन्मनश्शोकाद्यनुबन्धं ममतां विधत्ते । एवं स्वामिभृत्यव्यवहारस्य मनोनिमित्तत्वेन मिथ्यात्वं प्रदर्श्य, इदानीं तस्य निवृत्युपायमाह –

न यावदेतां तनुभृन्नरेन्द्र
विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नः
वेदात्मतत्त्वं भ्रमतीह तावत् ॥ -११०

तनुभृद्देही वयुनोदयेन ज्ञानोत्पत्त्या यावन्मायां विधूयात्मतत्त्वं न वेद तावदिह भ्रमति । यस्तु वेद स न भ्रमतीति भावः । इदमात्मतत्त्वं कीदृशमित्यपेक्षायामाह –

ज्ञानं विशुद्धं परमार्थमेकं
त्वनन्तरं त्वबहिर्ब्रह्म सत्यम् ।
प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं
यद्वासुदेवं कवयो वदन्ति ॥ -१११

एतत्प्राप्तिश्च महत्सेवां विना न भवतीत्याह —

रहूगणैतत्तपसा न याति
न चेज्यया निर्वपणाद्गृहाद्वा ।
तच्छन्दसा नैव जलाग्निसूर्यैः
विना महत्पादाब्जेऽभिषेचितेन ॥ -११२-

एतत् ज्ञानं तपसा पुरुषो न याति, इज्यया वैदिककर्मणा, निर्वपणादन्नादिसंविभागेन, गृहाद्वा तन्निमित्तपरोपकारेण च । न छन्दसा न वेदाभ्यासेन । जलादिभिरुपासितैः । विषयासङ्गस्तु योगभ्रंशकर इति वदन् "कस्त्वं निगूढश्चासी"ति प्रश्नस्योत्तरमाह –

अहं पुरा भरतो नाम राजा
विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानः
मृगोऽभवः मृगसङ्गाद्धतार्थः ॥ -११३-

विमुक्तः दृष्टश्रुताभ्यां सङ्गतिनिमित्तो बन्धो येन । हतोऽर्थः प्रयोजनं यस्य सः । श्रीकृष्णार्चनं भ्रष्टमप्युद्धरतीत्याह –

मा मा स्मृतिर्मृगदेहेऽपि वीर
कृष्णार्चनप्रभवा नो जहाति ।

अथो अहं जनसङ्गादसङ्गात्

असङ्कमानोऽविवृतश्चरामि ॥ ११४

जनसङ्गाद्विशङ्कमानः, अविवृतोऽप्रकटः ।

रहूगण त्वमपि ह्यध्वनोऽस्य

सन्यस्य दण्डः कृतभूतमैत्रः ।

असर्जितात्मा हरिसेवया शितं

ज्ञानासिमादाय तरति हि पारम् ॥ ११५

हे रहूगण, त्वमपि ह्यध्वनि निवेशितचित्त इत्यध्याहारः । अतोऽस्याध्वनः पारमतितरः । असर्जितात्मा विषयेष्वनभिनिवेशितचित्तस्सन् । हरिसेवया शितं तीक्ष्णीकृतम् । श्रीशुकः –

"इत्येवमुत्तरामातस्स वै ब्रह्मर्षिसुतस्सिन्धुपतये आत्मतत्त्वमविभणितपरमकारुणिकतयोपदिश्य, रहूगणेन सकरुणमभिवन्दितचरणः पूर्णार्णव इव निभृतकरणोर्म्याशयो धरणीमिमां विचचार ।"

उत्तरा माता यस्य सः । तस्य सम्बोधनम् । निभृताश्शान्ताः करणानामूर्मयो यस्मिन्सः आशयः यस्य सः । सौवीरपतिरपि सुजनसमवगतपरमात्मतत्वः, आत्मन्यविद्याध्यारोपितां च देहात्ममतिं विससर्ज । सुजनात्तस्मात्सम्यगवगतं परमात्मतत्त्वं येन । तथाभूतस्सन् तदानीमेव देहे आत्ममतिं

विससर्ज। पारमहंस्यं प्राप्य पर्यटता कदाचिदपि विषयसङ्गो न कर्तव्यः एवेत्याह श्रीशुकः —

न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते।
यद्विस्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम्॥ -११६

यद्विस्रम्भात् यद्विश्वासात्, चिराच्चीर्णमपि बहुकालसञ्चितमपि तपश्चस्कन्द सुस्राव। ऐश्वरं ईश्वराणां समर्थानामपि सौभरी-प्रभृतीनामपि, तपः। अत एवेदमाह —

यो दुस्त्यजान्दारसुतान् सुहृद्राज्यं हृदिस्पृशः।
जहौ युवैव मलवत् उत्तमश्लोकलालसः॥ -११७

सुहृद्राज्ययोर्द्वन्द्वैक्यम्। यो दुस्त्यजान्दारसुतादीन्, मलं विष्ठमिव जहौ, स एव धन्य इत्यर्थः। दुस्त्यजत्वे हेतुः हृदिस्पृशः मनोज्ञान्। त्यागे हेतुः उत्तमश्लोकलालस। यस्तु विषयान्न त्यजति तमाक्रोशन्निदमाह भद्रश्रवाः -

अहो विचित्रं भगवद्विचेष्टितं
घ्नन्तं जनो यन्निमिषन्न पश्यति।
ध्यायन्न सद्यर्हि विकर्म सेवितुं
निहृत्य पुत्रं पितरं जिजीविषति॥ -११८

अयं जनो निमिषन्नपि घ्नन्तं हिंसन्तमपि न पश्यति नालो-चयतीति भगवद्विचेष्टितमेव। तच्च विचित्रम्। अदर्शने लिङ्ग

पुत्रं बालं, पितरं वृद्धं, मृतं निहत्य दग्ध्वा, स्वयं तदुभयधनैः जिजीविषति जीवितुमिच्छति । जिजीविषुरिति पाठे न छन्दोभङ्गः । किं धर्माद्यर्थं ? न, यर्हि यतो असत्तुच्छं विषयसुखं सेवितुं । विकर्म पापमेव ध्यायन् । ननु अविद्वान्न पश्यतीति किमत्र चित्रं, तत्राह —

वदन्ति विश्वं कवयोऽपि नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज, मायया
सुविस्मितं कृत्यमजं नतोऽस्मि तम् ॥ -११९

नश्वरं वदन्ति शास्त्रतः, पश्यन्ति समाधौ, हे अज, तथापि मायया मुह्यन्ति । एतच्च तव कृत्यं चेष्टितं, सुविस्मितं अतिचित्रम् । ततश्शास्त्रादिक्रमं विहाय, तत्त्वामजं नतोऽस्मि यस्मादेवं, तस्माद्गृहं हित्वा अकुतोभयं नृसिंहपादं भजतेत्यनुरागादुपदिशति असुरान्प्रति प्रह्लादः —

तस्माद्रजोरागविषादिमन्यु-
शोकस्पृहाभयदैन्यादिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजताऽकुतोभयम् ॥ -१२०

कीदृशं गृहं ? रजस्तृष्णा, रागोऽभिनिवेशः, रजआदीनां मूलं कारणम् । अत एव संसृतीनां जन्ममरणादीनां चक्रवालं मण्डलं । अन्यथा तस्य शास्त्राभ्यासादिश्रमो व्यर्थ इत्याह –

यथैहिकामुष्मिककामलम्पटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान्कुकलेवरात्ययात्
यस्तस्य यत्नः श्रम एव केवलम् ॥ -१२१

यथा ऐहिकामुष्मिककामेषु लम्पटः मूर्खः, सुतादियोगक्षेमं चिन्तयन्, कुत्सितस्य कलेवरस्यात्ययान्मृत्योः शङ्केत तथा विद्वानपि सन् यश्शङ्केत, तस्य यत्नः केवलं श्रम एव ।

॥ इति पञ्चमस्कन्धसारसङ्ग्रहः ॥

## ॥ अथ षष्ठस्कन्धसारसङ्ग्रहः ॥

विषयासक्तिर्भगवद्भक्तमन्तरा न गच्छतीति सत्सङ्गं प्रार्थयते भगवन्तं प्रति वृत्रः –

ममोत्तमश्लोकजनेषु सख्यं
संसारचक्रे भ्रमतस्स्वकर्मभिः ।
त्वन्माययाऽऽत्मात्मजदारगेहे-
ष्वासक्तचित्तस्य न नाथ भूयात् ॥ -१

उत्तमश्लोकस्य तव, जनेषु भक्तेष्वेव सख्यं भूयात्। त्वन्मायया देहादिषु आसक्तचित्तस्य भूयोऽपि नैवासक्तिर्न भूयात्। विषयासक्तिनिवृत्तौ किं फलतीत्यपेक्षायामाह –

सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः।
तथा साक्षिणमात्मानं यो वेद न स बाध्यते॥ -२

इममेवार्थमुपसंहरन्नाह चित्रकेतुं प्रति अङ्गिराः –

तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः।
द्वैते ध्रुवार्थविस्रम्भं त्यजोपशममाविश॥ -३

स्वस्थेनाव्यग्रेण, "ध्रुवोऽयमर्थ" इति विस्रम्भं विश्वासं प्रणयं वा त्यज। ततश्च उपशममाविश आश्रय। ननु जन्ममरणादिधर्मवत्त्वेनात्मनोऽनित्यत्वात् कथमुपशमस्स्यात्तत्राह अंगिरसं प्रति मृतशरीरे आविर्भूतो जीवः --

एष नित्योऽव्ययस्सूक्ष्मः एकस्सर्वाश्रयस्स्वदृक्।
आत्ममायागुणैर्विश्वमात्मानं सृजति प्रभुः॥ -४

एष नित्यः। तत्र हेतुरव्ययः क्षयशून्यः। तत्कृतस्सूक्ष्मः जन्मादिशून्यः। तच्च कुतः! सर्वाश्रयः, जन्मादिमतो देहादेराश्रयः, न तु देहादिरूपः। यतः, स्वदृक् स्वप्रकाशः। सर्वाश्रयत्वमुपपादयति आत्ममायया गुणैरात्मानमेव विश्वं विश्वात्मकं सृजति। "तदात्मानं स्वयमकुरुते" ति श्रुतेः।

उपादानकारणत्वात् सर्वाश्रय इत्यर्थः। जीवस्य वस्तुतो ब्रह्मत्वात्, ब्रह्मण एव विभक्तिविशिष्टस्येश्वरत्वेन सृष्टत्वात् जीवस्सृजतीति वाचोयुक्तिः, यद्वा स्वकर्मद्वारा सृष्टिनिमित्तत्वेन स्रष्टृत्वं, भोग्यस्य च सर्वस्य भोग्याश्रयत्वात् सर्वाश्रयत्वं चोक्तमिति द्रष्टव्यम्। नन्वेवं सति "कुतस्सुहृदो बान्धवास्तप्ता" इति? तत्राह —

न ह्यस्यातिप्रियः कश्चित नाप्रियः स्वपरोऽपि वा।
एकस्सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः॥ -५

तत्र हेतुः एकः, सुहृदादिसङ्गरहितः। तत कुतः? गुणदोषयोः हिताहितयोः। शत्रूणां मित्रादीनां च। यास्सर्वधियः विचित्रा बुद्धयः, तासां द्रष्टा साक्षी। तर्हि "भुङ्क्ष्व भोगान्" तत्राह —

नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम्।
उदासीन इवासीनः परावरदृगीश्वरः॥ -६

गुणं सुखं, दोषं दुःखं, क्रियाफलं राज्यादिकम्। उदासीनत्वे हेतुः परावरदृक्। कारणस्य च कार्यस्य च साक्षी, न तु भोक्ता, यत ईश्वरः, देहादिपारतन्त्र्यशून्यः। अत एवंभूतस्य मम च युष्माकं च सम्बन्धाभावाच्छोकं मा कुरुतेति वाक्यार्थः। अतस्त्वमेवं पश्येत्याह चित्रकेतुं प्रति भगवान् —

लोके विततमात्मानं लोकं चात्मनि सन्ततम् ।
उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ -७

लोके भोग्यप्रपञ्चे, भोक्तृत्वेन विततमनुगतमात्मानं, लोकं च आत्मनि भोग्यत्वेन सन्ततं व्याप्तं, तदुभयं च मया कारणेन व्याप्तं, मयि चैवोभयं कृतम् कल्पितं स्मरेदिति तृतीयेनान्वयः। ननु जाग्रदाद्यवस्थाभेदेन भोक्तृभोग्यात्मकं विश्वं स्फुटं प्रतीयमानं कथं कल्पितं स्यादित्याशङ्क्य, स्वप्नगतजाग्रदादिदृष्टान्तेन सम्भावयन्नाह द्वाभ्याम् –

यथा सुषुप्तः पुरुषः विश्वं पश्यति चात्मनि ।
आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ -८

यथा सुषुप्तः, विश्वं गिरिवनादिरूपं देशान्तरस्थमात्मन्येव पश्यति । स्वप्नमध्ये सुषुप्तिं स्वप्नं च पश्यतीत्यर्थः । तथा स्वप्न एवोत्थितस्सन्, आत्मानमेकदेशस्थं शयनदेशे स्थितं मन्यते । तथा जाग्रदवस्थामनुभवति ।

"एवं जागरणादीनि जीवस्थानानि चात्मनः । मायामात्राणि विज्ञाय, तद्द्रष्टारं परं स्मरेत्"। एवं प्रसिद्धान्यपि जागरणादीनि जीवस्थानानि जीवोपाधेर्बुद्धेरवस्थाः आत्मनो मायामात्राणीत्येवं विज्ञाय, तेषां द्रष्टारं, अत एव परं, तदवस्थारहितं आत्मानं स्मरेत् । ननु तेषां द्रष्टारमिति कथमुच्यते ? स्वप्ने दृश्याभावेन द्रष्टृत्वाभावात्तत्राह —

येन प्रसुप्तः पुरुषः स्वाप्नं वेदात्मनस्तथा ।
सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ -९

सुपुप्तः पुरुषो जीवः, येन रूपेण तदा स्वापकाले आत्मनः स्वरूपं निर्गुणमतीन्द्रियं सुखं च वेद तमात्मानं ब्रह्म मामेवावेहि। तथा स्वापसुखयोरसंवेदने, "सुखमहमस्वाप्समि" ति स्मृतिः न स्यात् । ननु स्वापसाक्षिणा दृष्टं, कथं जाग्रदवस्थः स्मरेत्। न ह्यन्येन दृष्टं अन्यस्स्मरति। तत्राह —

उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ।
अन्वेति व्यतिरिच्येत तद्ज्ञानं ब्रह्म तत्परम् ॥ -१०

उभयं स्वापं प्रबोधं च, स्मरतः अनुसन्दधतः, तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेन यदन्वेति, ताभ्यां व्यतिरिच्येत च एकैकापायेऽप्यनपायात् तत् ज्ञानरूपं ब्रह्म, तदेव, न तु भिन्नमित्यर्थः। बन्धमोक्षयोर्विद्यमानतया कथमेकत्वमित्याशङ्क्य, आह श्रीपार्वतीं प्रति विद्याधरः —

एकस्सृजति भूतानि भगवानात्ममायया ।
एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः॥ -११

एकः परमेश्वरः, मायया निमित्तभूतया, भूतानि प्राणिनस्सृजति, बन्धादिकं च सृजति। निष्कलः, स्वयं बन्धशून्यः, कार्यकारणव्यतिरेकाभावादभेदः सङ्गच्छते। अभेदमेवाह -

न तस्य कश्चिद्दयितो न प्रतीपः

न ज्ञातिबन्धुर्न परो न च स्वः ।

समस्य सर्वत्र निरञ्जनस्य

कुतोऽनुरागः कुत एव रोषः ॥ -१२

प्रतीपोऽप्रियः, न ज्ञातिबन्धुश्च । तत्र हेतुः सर्वत्र समस्य । तत्कुतः निरञ्जनस्य, निस्सङ्गस्य । अत एव तन्निमित्ते सुखे रागो नास्ति, रागानुबन्धो रोषः कुतस्स्यात् ।

॥ इति षष्ठस्कन्धसारसङ्ग्रहः ॥

## ॥ अथ सप्तमस्कन्धसारसङ्ग्रहः ॥

ननु आत्मनः पूर्वं भेद उक्तः । स न सम्भवति । देहादिधर्मकत्वेन भेदप्रतीतेरित्याशङ्क्य, दृष्टान्तेन परिहरति प्रेतबन्धून्प्रति यमः —

यथाऽनलो दारुषु भिन्न ईयते

यथाऽनिलः देहगतः पृथक्स्थितः ।

यथा नभस्सर्वगतं न सज्जते

तथा पुमान् सर्वगुणाश्रयः परः ॥ -१

यथाऽनल एकोऽपि दारुष्ववस्थितस्सन् दाहकत्वेन प्रकाशकत्वेन च भिन्न इव प्रतीयते । यथाऽनिलः एकोऽपि देहगतस्सन् नासिकादिभेदेन पृथगिव स्थितः प्रतीयते । तथैकोप्यात्मा-देहादौ स्थितः, तद्धर्मादिना भिन्न इव प्रतीयते इत्यर्थः । देहस्थत्वेऽपि आत्मनः तद्धर्मयोगाभावे दृष्टान्तमाह, यथा नभो न सज्जते क्वापि सङ्गं न प्राप्नोति, तथा पुमानपि सर्वेषां गुणानां देहेन्द्रियादीनां आश्रयः । तेष्वाश्रितोऽपि परः पृथगेवेत्यर्थः । परमार्थतः देहेन्द्रियादिकं वस्तु किमपि नास्ती-त्याह युधिष्ठिरं प्रति नारदः —

"यथा मनो रथयति

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ -२

ब्रह्मण्यश्शीलसम्पन्नस्सत्यसन्धो जितेन्द्रियः ।
वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ -३

गुणैर्महागुणानेवाह महदुपासक" इत्यादिना । नैसर्गिकरतेः लिङ्गान्याह षड्भिः —

न्यस्तक्रीडनको बालः जडवत्तन्मनास्तथा ।
नानुसन्धत्त एतानि गोविन्दपरिरम्भितः ॥ -४

एतानि आसनादीनि, गोविन्दपरिरम्भितः आत्मना एकीकृतः ।

क्वचिद्रुदति वैकुण्ठचिन्ताव्यामिश्रचेतनः ।
क्वचिद्धसति तच्चित्ताह्लाद उद्गायति क्वचित् ॥ -५

रुदति रोदिति, वैकुण्ठस्य चिन्तया व्यामिश्रा क्षुभिता चेतना यस्य । तच्चिन्तया आह्लादो यस्य ।

नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित्तद्भावनायुक्तः तन्मयोऽनुचकार ह ॥ -६

उत्कण्ठः मुक्तकण्ठस्सन्, अनुचकार तच्चेष्टादिकं स्वयं कृतवान् ।

क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ -७

संस्पर्शः तद्भावापत्तिः तेन निर्वृतः । अस्पन्दः स्थिरो यः प्रणयः, तेनानन्देन यत्सलिलं, तेन युक्ते आमीलिते ईषन्मीलिते ईक्षणे यस्य ।

उत्तमश्लोकपदारविन्दयोः
निषेवया किञ्चन सङ्गलब्धया ।
तन्वन्परां निर्वृतिमात्मनो मुहुः
दुस्सङ्गदीनस्य मनश्शमं व्यधात् ॥ -८

आत्मनः परां निर्वृतिं तन्वन्, दुस्सङ्गेन दीनस्यान्यस्यापि मनसः शमं शान्तिं व्यधात् । भगवद्भक्तिरेवापवर्गसाधनमित्याह हिरण्यकशिपुं प्रति प्रह्लादः —

तत्साधु मन्येऽसुरवर्य देहिनां
सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वाऽऽत्मपातं गृहमन्धकूपं
वनं गतो यद्धरिमाश्रयेत ॥ -९

हे असुरवर्य, असद्ग्रहात् अहंममेति मिथ्याभिनिवेशाद्धेतोः सम्यक् उद्विग्ना धीर्येषां, तेषां वनं गतस्सन् हरिमाश्रयेतेति यत्तदेवाह साधु मन्ये । कथंभूतं गृहं हित्वा ? आत्मनः पातं, अथ पातनिमित्तम् । कुतः ? अन्धकूपवन्मोहावहं । भवादृशानां विषयासक्तानामत्र अधिकार इत्याशयेनाह —

मतिं न कृष्णे परतः स्वतो वा
मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं
पुनः पुनश्चर्वितचर्वणानाम् ॥ -१०

परतः गुरोः, स्वतो वा मिथो वा, अन्योन्यतः, नाभिपद्येत न सम्पद्येत । केषां ? गृह एव व्रतं सङ्कल्प इति कृत्य-चिन्ता येषां, अत एवादान्तैरनुपरतैः गोभिरिन्द्रियैः हेतुभूतैः, तमिस्रं संसारं विशतां, तत्र च चर्वितं चर्वणं येषाम् । ननु श्रीकृष्णस्य परमानन्दरूपत्वात् तेऽपि तन्निष्ठा एव किं न स्युः ? तदज्ञानादित्याह —

न ते विदुः स्वार्थगतिं हि विष्णुं
दुराशया ये बहिरर्थमानिनः ।
अन्धा यथाऽन्धैरुपनीयमाना:
वाचीशतन्त्यामुरुदाम्नि बद्धाः ॥ -११

ये दुराशया विषयवासितान्तःकरणास्ते हि, विष्णुं न विदुः । तत्र हेतुः स्वस्मिन्नेवार्थः पुरुषार्थः येषां, तेषां गतिं गम्यम् । ननु तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति, तत्राह बहिः विषयेषु अर्थो येषां बहिरर्थाः तानेव गुरुत्वेन मन्तुं शीलं येषां ते । अन्धैरुपनीयमानाः अन्धा यथा पन्थानं न विदुः । किन्तु गर्ते निपतन्ति । तेऽपि ईश्वरस्य तन्त्यां दीर्घरज्वां वेदलक्षणयां उरूणि दामानि ब्राह्मणादीनि नामानि यस्यां, काम्यैः कर्मभिः बद्धा एव भवन्तीत्यर्थः । ननु कथं विष्णुं न विदुः ? कुतो वा तेषां तमिस्रप्रवेशस्तत्राह –

नैषां मतिस्तावदुरुक्रमाङ्घ्रिं
स्पृशत्यनर्थापगमो यदर्थः ।
महीयसां पादरजोऽभिषेकं
निष्किञ्चनानां न वृणीत यावत् ॥ -१२

निष्किञ्चनानां निरस्तविषयाभिमानिनां, पादरजसामभिषेकं यावन्न वृणीत, तावच्छ्रुतिवाक्यतो जाताप्येषां मतिः, उरुक्रमस्याङ्घ्रिं न स्पृशति न प्राप्नोति । असम्भावनादिभिर्भिद्यत इत्यर्थः ।

अनर्थस्य संसारस्यापगमो यदर्थः यस्याङ्घ्रिस्पर्शस्य अर्थः प्रयोजनम् ।

महदनुग्रहाभावान्न तत्वनिश्चयः, नापि मोक्षस्तेषामित्यर्थः । ननु किमनेन प्रयासेन ? यौवने गृहासक्तोऽपि पश्चाद्विरक्तस्सन् मोक्षं यास्यतीत्याशङ्क्य, तदसंभवं दर्शयन् कौमारे एवाचरेदित्येतदुपपादयति बालकान्प्रति प्रह्लादः —

कथं प्रियाया अनुकम्पितायाः
सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।
सुहृत्सु च स्नेहसितशिशूनां
कलाक्षराणामनुरक्तचित्तः ॥ -१३

प्रियायास्सङ्गादिकं स्मरन् कथं त्यजेदेति द्वितीयेनान्वयः । मन्त्रान् हितशिक्षालापान्, सुहृत्सु च सङ्गं तेषां, तेषां स्नेहेन सिता बद्धाः, कलानि मधुराण्यक्षराणि येषां तेषाम् ।

त्यजेत कोशस्कृदिवेहमानः
कर्माणि लोभादवितृप्तकामः ।
औपस्थ्यजैह्व्यमधिमन्यमानः
कथं विरज्येत दुरन्तमोहः ॥ -१४

कोशस्कृत् कोशकारी कीटस्थः, यथा गृहं कुर्वन् नात्मनो निर्गमाय द्वारमपि नावशेषयति, तथा कर्माणि ईहमानः । ननु अवितृप्तकामोऽपि दोषदर्शनेन विरक्तस्सन् त्यजेत्तत्राह

औपस्थं शैश्नं जैह्वं च यत्सुखं, तदेवाधिकं मन्यमानः, अतः दुरन्तो मोहो यस्य सः । कथं विरज्येत विरक्तस्स्यात् । दुरन्तमोहं च दर्शयन्नाह -

कुटुम्बपोषाय वियन्निजायुः
न बुध्यतेऽर्थं विहतं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा
निर्विद्यते न स्वकुटुम्बरामः ॥ -१५

कुटुम्बपोषणाय वियत्क्षीणं निजमायुः पुरुषार्थं च विहतं न बुध्यते । अत एव तापत्रयेण दुःखितचित्तोऽपि न निर्विद्यते । दुःखबुद्धिं न करोति । यतः स्वकुटुम्बे रामो मतिर्यस्य सः । तस्मात्कौमार एव भागवतान्धर्मानाचरेदिति सहेतुकमुपसंहरति —

यतो न कश्चित् क्वचिदत्र विद्वान्
दीनस्स्वमात्मानमलं समर्थः ।
विमोचितुं कामदृशां विहार-
क्रीडामृगोऽयं निगलो विसर्गः ॥ -१६

यतः कश्चिदपि विद्वानपि स्वात्मानं मोचयितुं न समर्थः । अतः श्रीनारायणमुपेतेत्युत्तरेणान्वयः । असामर्थ्ये हेतुः अलं दीनः लम्पटः, अत एव कामो दृक् यासां, तासां विहारे क्रीडायां निमित्ते क्रीडामृगः । किञ्च, यत्र यासु निगलः शृङ्खलः तुल्यः विसर्गः पुत्रादिरूपो भवति ।

अतो विदूरात्परिहृत्य दैत्याः
दैत्येषु सङ्गं विषयात्मकेषु ।
उपेत नारायणमादिदेवं
विमुक्तसङ्गैरिषितोऽपवर्गः ॥ -१७

विदूरात् दूरतस्सङ्गं परिहृत्य यद्वा अविदूराच्छीघ्रमुपेतेत्यन्वयः । यस्मात्स एवापवर्गः इष्टः । बालानामस्माकं तद्भजनमशक्यमिति चेत्तत्राह -

नह्यच्युतं प्रीणयतः बह्वायासोऽसुरात्मजाः ।
आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ -१८

बह्वायासोऽतिप्रयासः, आत्मत्वात्सर्वत्र सिद्धत्वात् । इदानीं आत्मधर्मैरेवाभेदं स्फुटयन्नाह —

आत्मा नित्योऽव्ययश्शुद्धः एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियस्स्वदृग्घेतुः व्यापकोऽसङ्ग्यनावृतः ॥ -१९

कल्पयस्त्वेवं मिथ्यात्वेन ज्ञात्वा, परिव्रज्य सन्न्यस्य विचरेदित्यन्वयः । कियदत्र त्याज्यं देहव्यतिरिक्तं सर्वमित्याह देहमात्रेति । तस्य धर्मानाह —

बिभृयाद्यद्यसौ वासः कौपीनाच्छादनं परम् ।
त्यक्तं लिङ्गं न दण्डादेरन्यत्किंचिदनापदि ॥ -२०

कौपीनमाच्छाद्यते यावता, तावन्मात्रं, परं केवलम् । दण्डादेरन्यत् प्रैषोच्चारणात्पूर्वमेव त्यक्तं न गृह्णीयादित्यन्वयः

एक एव चरेद्भिक्षुः आत्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ -२१

अनपाश्रयः अनिकेतः ।

पश्येदात्मन्यथो विश्वं परे सदसतोऽव्यये ।
आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ -२२

सदसतः परे, कार्यकारणव्यतिरिक्ते । नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः ? न हि बद्धमुक्तयोरैक्यं सम्भवति । तत्राह –

सुप्तिप्रबोधयोस्सन्धावात्मनो गतिमात्मदृक् ।
पश्यन् बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ -२३

सुषुप्तौ हि तमसावृतमात्मतत्वं, जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते । सन्धौ न तमो नापि विक्षेपः । अतस्तदात्मदृक् आत्मानं लक्षीकृत्य स्थितस्सन् आत्मनो गतिं तत्त्वं पश्यन् अत एव बन्धं मोक्षं च मायामात्रं पश्यन्नात्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः । तदुक्तं योगग्रन्थे –

"निद्रादौ जागरस्यान्ते यो भाव उपपद्यते ।
तं भावं भावयन्नित्यं मुच्यते नेतरो यतिः ॥" इति ॥ -२४

नाभिनन्देद्ध्रुवं मृत्युं अध्रुवं चास्य जीवितम् ।
कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययौ ॥ -२५

अस्य देहस्य प्रभवः अप्ययश्च यस्मात्तं कालम् । "नासच्छास्त्रेषु सज्जेत तर्कान्पक्षं कंचन संश्रयेत् ।" असच्छास्त्रेषु अनात्मपरेषु, जीविकां न क्षत्रवित्त्यादिवृत्तिं, अतिवादाञ्जल्पवितण्डादिनिष्ठान्, कंचन, कमपि पक्षं निर्बन्धेन संश्रयेत् –

न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥ -२६

नानुबध्नीत प्रलोभादीन् बालानां नापादयेत् । आरम्भान् मठादिव्यापारान् । तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह –

अव्यक्तलिङ्गोऽव्यक्तार्थो मनीष्युन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ॥ -२७

बहिरव्यक्तं लिङ्गं यस्य, अव्यक्तः अर्थः प्रयोजनं यस्य सः । मनीष्यपि उन्मत्तवत् च, कविरपि मूकवदात्मानं नृणां तद्दृष्ट्या दर्शयेत् । ते यथोन्मत्तादिरूपं मन्येरन् तथा वर्तेत । स्वदृष्ट्येति पाठे बाह्यानुसन्धानाभावादित्यर्थः । पारमहंस्यं धर्ममेव इतिहासेन स्फुटयति –

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ -२८

आजगरस्य अजगरव्रतस्य मुनेः ।

तं शयानं धरोपस्थे कावेर्या सह्यसानुनि ।
रजस्वलैस्तनूद्देशैः निगूढामलतेजसम् ॥ -२९

धरोपस्थे भूपृष्ठे सह्याद्रेस्तटे, रजोभिर्धूसरैस्तनूद्देशैः देशैः देहाद्यवयवैः निगूढं अमलं तेजः यस्य तम् ।

ददर्श लोकान्विचरल्लोकतत्त्वविवित्सया ।
वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ -३०

कर्मणा कृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ।
न विन्दन्ति जना यं वै सोऽसाविति न वेति च ॥ -३१

तं नत्वाऽभ्यर्च्य विधिवत् पादयोश्शिरसा स्पृशन् ।
विवित्सुरिदमप्राक्षीत महाभागवतोऽसुरः ॥ -३२

कर्मादिभिर्जना यं न विदुः तं पादयोः शिरसा स्पृशन्नत्वा अप्राक्षीदित्यन्वयः ।

प्रह्लादः —

न ते शयानस्य निरुद्यमस्य
ब्रह्मन्निहार्थो यत एव भोगः ।

अभोगिनोऽयं तव विप्रदेहः

पीवान्यतः तद्वद नः क्षमं चेत् ॥ -३३

इति निश्चये इह इति प्रसिद्धौ । तत्रार्थो नास्तीति प्रसिद्ध-मेवेत्यर्थः । यतोऽर्थादेव यतो हेतोः पीवा नः अस्माकं, क्षम योग्यं चेद्वद । एवं पृच्छन्तं मुख्याधिकारिणं मत्वा शयानोऽपि शीघ्रमुत्थाय, स्वाभिप्रायमाविष्करोति ब्राह्मणः -

मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ।

वैराग्यं परितोषं च प्राप्ता यच्छिक्षयाव्ययम् ॥ -३४

मधुमक्षिकाजगरयोश्शिक्षया वृत्तिपर्यालोचनया । मधुकराच्छि-क्षितमाह —

विरागस्सर्वकामेभ्यः शिक्षतां मे मधुव्रतात् ।

कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिम् ॥ -३५

वित्तपतिं हत्वाप्यन्यो वित्तं हरेदित्येवम् । अजगराच्छिक्षित-माह —

अनेहः परितुष्टात्मा यदृच्छोपनतादहम् ।

नो चेच्छये बह्वहानि महाहिरिव सत्ववान् ॥ -३६

सत्ववान्धैर्यवान् । पीनत्वे हेतुत्वेन यदृच्छया प्राप्तात् । परितोषं प्रपञ्चयति षड्भिः -

क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं ताध्वसाधु वा ।
क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ -३७

श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितम् ।
भुञ्जे भुक्त्वाथ कस्मिंश्चिद्दिवानक्तं यदृच्छया ॥ -३८

क्षौमं दुकूलमजिनं चीरं वल्कलमेव च ।
वसे यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ -३९

चीरं जीर्णवस्त्रखण्डं, वसे परिदधे । दिष्टभुक् प्रारब्धभोगी ।

क्वचिच्छये धरोपस्थे तृणपर्णाश्मवेश्मसु ।
क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ -४०

प्रासादमध्ये पर्यङ्के तत्रापि कशिपौ क्वचित् ।
स्नातोऽनुलिप्तो ह्यस्नातः सुवासास्स्रग्वलङ्कृतः ॥
रथे भाग्याच्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥ -४१

चरे विचरामि । क्वचिद्ग्रहवद्दिगम्बरो विचरामि, न च मानावमानादिकर्तृषु मम वैषम्यमित्याह —

नाहं निन्दे न च स्तौमि स्वभावविषमाञ्जनान् ।
एतेषां श्रेय आशंसे उतैकात्म्यं महात्मनि ॥ -४२

नाहं निन्दामि । महात्मनि विष्णौ । एवंभूतत्वेन स्थितावुपायमाह —

विकल्पं जुहुयाच्चित्ते तन्मनस्यर्थविभ्रमे ।
मनो वैकारिके हुत्वा तन्मायायां जुहोत्यनु ॥ -४३

आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः ।
ततो निरीहो विरमेत् स्वानुभूत्यात्मनि स्थितः ॥ -४४

चित्तं भेदग्राहकमनोवृत्तौ । अर्थरूपो विभ्रमो यस्मिन् । वैकारिकेऽहङ्कारे । अनु अनन्तरम् । महत्तत्वद्वारेणेत्यर्थः । ननु आत्मतत्वज्ञस्य भिक्षोः इन्द्रियलौल्येऽपि को दोष इत्यत्राह युधिष्ठिरं प्रति नारदः —

आत्मानं चेद्विजानीयाम् परं ज्ञानधुताशयः ।
किमिच्छन् कस्य वा हेतोः देहं पुष्णामि लम्पटः ॥ -४५

आत्मानं परं ब्रह्म चेद्विजानीयात्, ज्ञानेन धुतानि निरस्तानि आशया वासनया यस्य सः । तादृशस्य ज्ञानिनः लौल्यमेव न सम्भवतीत्यर्थः । ननूपासकवत् ज्ञानिनो व्यावृत्तिरस्ति, नेत्याह —

देवयानमिदं प्राहुः भूत्वा भूत्वाऽनुपूर्वशः ।
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ॥ -४६

यथेतरो भूत्वा भूत्वा निवर्तते तथा ज्ञानी न निवर्तत इत्यर्थः ।

॥ इति सप्तमस्कन्धसारसङ्ग्रहः ॥

## ॥ अथाष्टमस्कन्धसारसङ्ग्रहः ॥

पूर्वं भगवतस्स्वरूपज्ञानादपुनरावृत्तिलक्षणा मुक्तिरुक्ता । इदानीं भगवान्कीदृश इत्यपेक्षायां तल्लक्षणमाह श्रीशुकः –

स विश्वकायः पुरुभूत ईशः

सत्यस्स्वयंज्योतिरजः पुराणः ।

धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या

तां विद्ययोदस्य निरीह आस्ते ॥ -१

स ईशः, अजः सत्यश्च स्वप्रकाशश्च पुराणश्च निर्विकारो विश्वं कायः यस्य, पुरूणि भूतानि नामानि यस्य, तथाविधोऽपि, यतः अस्य विश्वस्य, जन्मादि स्वशक्त्या मायया धत्ते । तां च नित्यसिद्धया विद्ययोदस्य हित्वा, निष्क्रिय आस्ते । अधुना ज्ञानोपायं कथयन्नाह गजेन्द्रः —

दिदृक्षवो यस्य पदं हि मङ्गलं

विमुक्तसङ्गा मुनयस्सुसाधवः ।

चरन्त्यलोकव्रतमव्रणं वने

हितात्मभूतास्सुहृदस्स मे गतिः ॥ -२

अलोकव्रतं ब्रह्मचर्यादि, अव्रणमच्छिद्रं, भूतानामात्मभूतं तेषु आत्मदृष्टयस्सन्तः । स मे गतिरस्तु । अत एव तैः परिभाव्यं रूपमाह द्वाभ्याम् —

एकान्तिनो यस्य न कंचनार्थं
वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं यच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः ॥ -३

तमक्षरं ब्रह्म परं परेशं
अव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरं
अनन्तमाद्यं परिपूर्णमीडे ॥ -४

यस्य त्वेकान्तभक्ता न कंचिदर्थं वाञ्छन्ति तं परेशमीडे । स्तौमीत्युत्तरेणान्वयः । तेषां निष्कामत्वे हेतुः ये भगवतस्सर्वज्ञान् मुक्तान्प्रपन्नास्सेवितवन्तः । अत्यद्भुतत्वसुमङ्गलत्वप्रदर्शनार्थं अक्षरत्वादि विशेषणानि । भगवतस्तत्रैवंभूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह श्रीहरः -

तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ।
विसृज्योभयतस्सङ्गं मुनयस्समुपासते ॥ -५

उभयतः इहामुत्र च सङ्गं त्यक्त्वा । ननु ब्रह्मैव चेदहं, तर्हि असङ्गोदासीनस्य मम चरणाम्भोजोपासनया किं तेषां ? तत्राह -

त्वं ब्रह्म पूर्णममृतं विगुणं विशोकं
आनन्दमात्रमविकारमनन्यमन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमानां
आत्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ -६

ब्रह्मत्वेऽपि त्वं नात्यन्तमुदासीनः, किन्तु विश्वस्य प्रपञ्चस्य उदयादीनां हेतुः, तदुपाधीनामात्मनां जीवानामीश्वरश्च, तत्फलदाता। तर्हि किं राजवत् कयाप्यपेक्षया सेवकेभ्यः फलं ददामि? नहि अनपेक्ष एव, त्वं तर्हि किमीश्वरत्वेन? तत्राह तैरात्मभिस्तत्तत्फलदानार्थमपेक्ष्यत इति तदपेक्षः, तस्य भावः तदपेक्षता तया। अनपेक्षत्वमेव दर्शयितुं "तदिदं ब्रह्मत्वं" विशिनष्टि पूर्णममृतं च सुखरूपम्। विषयसुखवैलक्षण्यार्थमाह अविकारम्। नित्यमानन्दमात्रं च। कुतः विशोकम्। तत्कुतः विगुणम्। कंचनान्यं, न विद्यतेऽन्यस्मात्, तद्व्यतिरिक्ताभावादपि निरपेक्षस्त्वमित्यर्थः। तर्हि सर्वात्मकत्वात्तद्विकारप्रसङ्गः दुर्वारः, तत्राह अन्यत्सर्वतो व्यतिरिक्तं, न ह्येवंभूतसुखात्मकब्रह्मस्वरूपस्य तवान्यापेक्षास्ति, अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं, न स्वार्थमित्यर्थः। ननु अनन्यत्वमन्यत्वं च एकस्य कुतः? इत्याशङ्क्य दृष्टान्तेनोपपादयति -

एकस्त्वमेव सदसद्द्वयमद्वयं च
स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।

अज्ञानतस्त्वयि जनैर्विहितो विकल्पः
यस्माद्गुणव्यतिकरो निरुपाधिकस्य ॥ -७

सदसत् कार्यकारणरूपं द्वयं अद्वयं च, परमकारणं त्वमेवैकः। कृतं कुण्डलादिरूपं द्वयमकृतं च केवलमद्वयं पूर्णम् यथैकमेव, तद्वदेव हि त्वयि वस्तुतो भेदो नास्ति। कथं तर्हि भेदप्रतीतिः तत्राह अज्ञानत इति। कुतः? यस्मान्निरुपाधिकस्यैव तवायं गुणैर्व्यतिकरो भेदः। न स्वतः।

॥ इत्यष्टमस्कन्धसारसङ्ग्रहः ॥

## ॥ अथ नवमस्कन्धसारसङ्ग्रहः ॥

पूर्वं भगवतोऽद्वितीयत्वं प्रतिपादितम्। अधुना तादृशस्य भगवतः साक्षात्कारस्स सन्यासः सकलपापनिवृत्तिद्वारा ब्रह्मस्वरूपं प्रापयतीति वक्तुमिदमाह श्रीशुकः —

एवं शप्तस्स्वगुरुणा प्रत्यगृह्णात् कृताञ्जलिः।
अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ -१

वृषध्रुः नाम मनोः पुत्रः गुरोराज्ञया गाः पालयामास। अथैकदा निशि व्याघ्रस्तत्रैकां जग्राह। अथ सा चुक्रोश। अथ तस्यास्तत्क्रन्दितं श्रुत्वा शीघ्रं खड्गमादाय व्याघ्रशङ्कया,

अजानन् बभ्रोः शिरश्चिच्छेद । अतस्तं गुरुः, "अरे त्वं क्षत्रियबन्धुरपि न भविता, अपितु शूद्रो भवित" इति शशाप एवं शप्तः व्रतमधारयदित्यन्वयः । व्रतमेवाभिनीय दर्शयति त्रिभिः —

वासुदेवे भगवति सर्वात्मनि परे मते ।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः ॥ -२

विमुक्तसङ्गश्शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः ॥ -३

आत्मन्यात्मानमादाय ज्ञानतृप्तस्समाहितः ।
विचचार महीमेनां जडान्धबधिराकृतिः ॥ -४

ततः किमत आह —

एवंवृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितः ।
तेनोपयुक्तकरणः ब्रह्म प्राप परं मुनिः ॥ -५

उपयुक्तकरणः दग्धदेहः । तस्य वृषद्ध्रोः कविर्नाम कनीयानप्येवं कृतार्थोऽभवदित्याह —

कविः कनीयान्विषयेषु निस्स्पृहः
विसृज्य राज्यं सहबन्धुभिर्गृहान् ।
निवेश्य चित्ते पुरुषं स्वरोचिषं
विशेषकैशोरवयाः परां गतिम् ॥ -६

एवं मत्स्वरूपप्राप्तिर्मद्भक्त्यैव भवतीत्याह दुर्वाससं प्रति श्रीभगवान् ।

मयि निर्बद्धहृदयास्साधवस्समदर्शिनः ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियस्सत्पतिं यथा ॥ -७

भगवत्सङ्गिनो विषयसङ्गस्सर्वात्मना त्याज्य इत्याह सौभरिः –

सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः
सर्वात्मनापि विसृजद्बहिरिन्द्रियाणि ।
एकश्चरेद्रहसि चित्तमनन्त ईशे
युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥ -८

मिथुनव्रतिनां दाम्पत्यधर्मवतां चेद्यदि प्रसङ्गस्तर्हि तद्व्रतिषु धर्मपरेष्वेव कार्य इति शेषः । विषयासक्तास्तु कुतो भगवन्तं पश्येयुरित्याह कपिलं प्रति अंशुमान् –

न पश्यति त्वां परमात्मनोऽजनः
न बुध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनश्शरीरधी-
विसर्गसृष्टा वयमप्रकाशाः ॥ -९

अजनः ब्रह्मापि त्वां अद्यापि न च बुध्यते । कथंभूतं ? आत्मनः स्वस्मात्परं न पश्यति । युक्तिभिः परोक्षमपि सम्यक् न बुध्यत इत्यर्थः । अपरेऽर्वाचीनाः कुतस्त्वां

पश्येयुः ? अर्वाचीनत्वे हेतुः, तस्य ब्रह्मणः मनश्च शरीरं च धीश्च सत्त्वतमोरजःकार्याणि, ताभिर्ये त्रिविधा देवतिर्यङ्नरादीनां सर्गाः तेषु सृष्टाः, तत्रापि वयमप्रकाशाः अज्ञाः । कुतः पश्येमेत्यर्थः । अपरः तर्हि कथं न पश्यति ? तदाह –

ये देहभाजः त्रिगुणप्रधाना:
गुणान्विपश्यन्त्युत वा ततश्च ।
यन्मायया मोहितचेतनास्ते
विदुस्स्वसंस्थं न बहिःप्रकाशाः ॥ -१०

ये देहभाजः ते, स्वस्मिन् सम्यक् स्थितमपि त्वां न विदुः । किन्तु गुणानेव विपश्यन्ति, अथवा न गुणानपि अपितु तत एव पश्यन्ति यतस्त्रिगुणा बुद्धिरेव प्रधानं येषां, अतो बहिरेव प्रकाशः येषाम् । बुद्धिपरतन्त्रतया जाग्रत्स्वप्नयोर्विषयान् पश्यन्ति । सुषुप्तौ तु तम एव केवलं, न तु निर्गुणं त्वाम् ।, सर्वत्र हेतुः यद्यतः यस्य तव मायया मोहितं चेतो येषां ते । तथापि त्वं विचारेण जानीहि चेत् तत्राह –

तं त्वामहं ज्ञानघनं स्वभाव-
प्रध्वस्तमायागुणभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं
कथं हि मूढः परिभावयामि ॥ -११

कथंभूतं ? ज्ञानघनं शुद्धज्ञानमूर्ति. स्वभावत एव प्रध्वस्तौ मायागुणावेव निमित्तौ भेदमोहौ येषां तैर्निभाव्यं विचिन्त्यं, अयं भावः ज्ञानघनत्वान्न तावत् ज्ञानविषयः, विचारविषयत्वेऽपि मायागुणैरभिभूतोऽहं न विचारे समर्थ इति। तस्मात् –

प्रशान्त, मायागुणकर्मलिङ्गं
अनामरूपं सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतदेहं
नमामि तं त्वां पुरुषं पुराणम् ॥ -१२

हे प्रशान्त, तं त्वां पुराणं पुरुषं केवलं नमामीत्यन्वयः । पुराणपुरुषत्वे हेतुः मायागुणैः कर्माणि विश्वसृष्टयादीनि लिङ्गानि च ब्रह्मादिरूपाणि यस्य, तं, प्रशान्तत्वे हेतुः सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां च विमुक्तं, अतः अनामरूपं तत् कृतनामरूपशून्यं किन्तु ज्ञानोपदेशाय गृहीतः प्रकटितः देहः शुद्धसत्वमूर्तिः येन तम् । स्वभाग्यं श्लाघते द्वाभ्याम् —

त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ -१३

कामादिभिर्विभ्रान्तानि चेतांसि येषां, अत इमे सर्वे गृहादिषु भ्रमन्ति ।

अद्य नस्सर्वभूतात्मन्, कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नः, भगवंस्तव दर्शनात् ॥ -१४

नः अस्माकं त्वत्कृपयैव घटितत्वाद्दर्शनादद्य, दृढोऽपि मोहमयः पाशश्छिन्नः। कथंभूतः? कामादीनां आश्रयः। त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः। एवमेवाह। कः? खट्वाङ्गः –

अथेशमायारचितेषु सङ्गं
गुणेषु गन्धर्वपुरोगमेषु।
रूढं प्रकृत्यात्मनि विश्वभर्तुः
भावेन हित्वा तमहं प्रपद्ये॥ -१५

अथ तस्मात्, प्रकृत्या स्वभावेनात्मनि रूढं गुणेषु सङ्गं, विश्वभर्तुर्भावेन हित्वा तमेवाहं प्रपद्ये। विषयसङ्गमेव निन्दन्नाह श्रीशुकः —

स्त्रीपुंप्रसङ्ग एतादृक् सर्वदैव भयावहः।
अपीश्वराणां किमुत ग्राम्यस्य हृतचेतसः॥ -१६

देवयानीं सम्बोध्य ययातिरपीत्थमेव चिन्तयति -

कामान्बहुविधान्भेजे कामैर्नाद्यापि तुष्यति।
तथाऽहं कृपणस्सुभ्रु भवत्यास्स्नेहयन्त्रितः॥ -१७
आत्मानं नाभिजानामि मोहितस्तव मायया।

काम्मैस्सेव्यमानैर्न तुष्यति। तर्हि पुनरपि बहवो विषयास्सेव्यन्तां ततो मनसि प्रीते सति, कामोपशान्त्या मोहो निवर्ततेति चेत्तत्राह द्वाभ्यां।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः ।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ -१८

न दुह्यन्ति न पूरयन्ति ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ -१९

हविषा घृतेत, कृष्णवर्माग्निरिव । तर्हि कदा केनोपायेन वा मनसः सम्पूर्णा प्रीतिस्स्यात् ? यया कामोपशमस्स्यादित्यत-आह षड्भिः —

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वास्सुखमया दिशः ॥ -२०

अमङ्गलं भावं रागद्वेषादिवैषम्यम् ।

या दुस्त्यजा दुर्मतिभिः या न जीर्यति जीर्यतः ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ -२१

दुःखानि नितरां वहतीति तथा ताम् । स्त्रीसन्निधानं तु सर्वदा त्याज्यमित्याह —

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामः विद्वांसमपि कर्षति ॥ -२२

विविक्तं असङ्कीर्णं आसनं यस्य सः । कर्षति आकर्षति ।

पूर्णं वर्षसहस्रं मे विषयान्सेवतोऽसकृत् ।
तथापि चानुसवनं तृष्णा तेषूपजायते ॥ -२३

तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निरहङ्कारः चरिष्यामि मृगैस्सह ॥ -२४

ननु तृष्णात्यागस्यातिदुष्करत्वात् कथं ब्रह्मणि मनसः आधानं स्यात्तत्राह —

दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् ।
संसृतं चात्मनाशं च तत्र विद्वान्स आत्मदृक् ॥ -२५

यो नानुध्यायेत् न संविशेत् न रुचोपभुञ्जीत । तत्र दृष्टश्रुतयोरनुध्यानादौ स आत्मदृक् भवति । श्रीशुकः –

स तत्र निर्मुक्तसमस्तसङ्गः
आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे
लेभे गतिं भागवतीं प्रतीतः ॥ -२६

विधुतं निरस्तं त्रिगुणात्मकं लिङ्गं येन । प्रतीतः प्रख्यातः । देवयान्यप्येवमेव कृतार्थाऽभवदित्याह —

सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ।
कृष्णे मनस्समावेश्य व्यधुनोल्लिंगमात्मनः ॥ -२७

॥ इति नवमस्कन्धसारसङ्ग्रहः ॥

## ॥ अथ दशमस्कन्धसारसङ्ग्रहः ॥

पूर्वं निरस्तविषयसङ्गानामेव भगवत्प्राप्तिरुक्ता । इदानीं सर्वेषामपि मुक्तानां, मुमुक्षूणां, विषयिणां च जनानां मध्ये भगवत्कथायां न कस्याप्यलंप्रत्यय इत्याह परीक्षित् –

निवृत्ततर्षैरुपगीयमानात्
भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात्
पुमान्विरज्येत विना पशुघ्नात् ॥ -१

निवृत्ततर्षैः गततृष्णैः मुक्तैरपीत्यर्थः । मुमुक्षूणामयमेवोपादेयः इत्याह भवौषधादिति । विषयिणामपि परमो विषयोऽयमेवेत्याह श्रोत्रमनोभिरामादिति । अपगता शुक् यस्मात्तमात्मानं-हन्तीति पशुघ्नं, तस्मात् । पशुघातिन इति वा । न केवलमेतावद्भक्तानां, मुक्तिरप्यस्तीत्याहुर्देवाः –

त्वय्यम्बुजाक्षाखिलसत्वधाम्नि
समाधिनावेशितचेतसैके
त्वत्पादपोतेन महत्कृतेन
कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ -२

निमित्तेन त्वत्पादपोतेन, एके मुख्याः विवेकिनः, महद्भिः सद्भिः कृतेन सेव्यतया सम्पादितेन । भवाब्धिं तुच्छं कुर्वन्ति,

अनायासेनैव तेषां मुक्तिरित्यर्थः। ननु ते न पोतेन चेत् पूर्वं पारं गतास्तर्हि इदानीन्तनानां का गतिः? तत्राह :—

स्वयं समुत्तीर्य सुदुस्तरं द्युमन्
भवार्णवं भीममदभ्रसौहृदाः।
भवत्पदाम्भोरुहनावमत्र ते
निधाय याताःसदनुग्रहो भवान्॥ -३

हे द्युमन्, स्वप्रकाशत्वात्पोतसामीप्यमात्रेण भवाब्धौ वत्सपद-मात्रे ज्ञाते, अतस्तन्निरपेक्षः स्वयमेवान्येषां भीमं सुदुस्तरमपि भवार्णवं समुत्तीर्य भगवत्पदाम्भोरुहनावमत्रैव निधाय याता इति भक्तिमार्गसम्प्रदायः। अवतीर्य पारं गता इत्यर्थः। तत्किं यानेन, अदभ्रसौहृदाः सर्वभूतेष्विति। प्रीतियुक्ताः, अतः तेषां तारणाय निधायेति। कथं तत्पादाश्रयणमात्रेण तीर्णाः? अतः उक्तं भवान्सदनुग्रहः, ततो भक्ताननुगृह्णातीति। ननु तद्वि-वेकिनां किं मद्भजनेन? मुक्ता एव ते। तत्राहुः—

येऽन्येऽरविन्दाक्ष विमुक्तमानिनः
त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥ -४

विमुक्तमानिनः मुक्ता वयमिति मन्यमानाः, त्वयि अस्तः निरस्तः यो भावः तस्मात्। भक्तेरभावादित्यर्थः। न विशुद्धा

बुद्धिर्येषां ते। कृच्छ्रेण बहुजन्मतपसा, परं पदं मोक्षसन्निहितं सत्कुलं तपःश्रुत्यादि, पतन्ति। अनादृतो युष्मदङ्घ्री यैस्ते। "त्वदीयास्तु न कदापि पतन्ति" इत्याहुः—

तथाऽनन्ते माधव तावकाः क्वचित्
भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः।
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्धसु प्रभो॥ -५

विनायकानीकपमूर्धसु, विनायकाः विघ्नहेतवः, तेषामनीकानि स्तोमास्तानि पान्ति, तेषां मूर्धसु विचरन्तीति। विघ्नान् जयन्तीत्यर्थः। पुत्रबुद्धिं परित्यज्याह वसुदेवः—

विदितो भगवान्साक्षात् पुरुषः प्रकृतेः परः।
केवलानुभवानन्दस्वरूपस्सर्वबुद्धिदृक्॥ -६

ननु देवकीजठरे प्रविष्टे सति मयि किमियं स्तुतिः क्रियते? अत आह—

स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम्।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे॥ -७

स एवोक्तस्वरूप एव त्वं न देवकीजठरे प्रविष्ट इत्यर्थः।

त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो
वदन्त्यनीहादगुणादविक्रियात्।

त्वयीश्वरे ब्रह्मणि नो विरुध्यते
तदाश्रितत्वादुपचर्यते गुणैः ॥ -८

नन्वनीहस्य कथं कर्तृत्वं, कर्तृत्वे वा कुतोऽविकारित्वम्? तत्राह त्वयीश्वर इति। ब्रह्मत्वादविकारित्वं, ईश्वरत्वाच्च कर्तृत्वमिति। नन्वेतदपि विरुद्धमेव, नेत्याह तदाश्रितत्वादिगुणैः कुर्वद्भिः त्वयि सृष्ट्यादिकर्तृत्वमुपचर्यते। गुणाश्रयत्वात् यथा भृत्यकृत्यं राज्ञीति।

रूपं यत्प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥ -९

अध्यात्मदीपः बुध्यादिकार्यकरणसङ्घातप्रकाशक इत्यर्थः। एवं भगवतस्स्तुतिरुक्ता। अथ तद्भक्तानां विद्वेषस्सकलानर्थकारीत्याह श्रीशुकः —

आयुः श्रियं यशो धर्मं लोकानाशिष एव च।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ -१०

महतां वैभवमाह गर्गाचार्यं प्रति नन्दः —

हेलाद्विचलनं नृणां गृहिणां दीनचेतसाम्।
निःश्रेयसाय भगवान् कल्पते नान्यथा क्वचित् ॥ -११

श्रीशुकः –

साधूनां समचित्तानां मुकुन्दचरणैषिणाम् ।
उपेक्ष्यैः किं धनस्तम्भैः असद्भिरसदाश्रयैः ॥ -१२

धनेन स्तम्भः गर्वः येषां तैः । नलकूबरमणिग्रीवौ श्रीभगवान् ।

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ।
दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोस्सवितुर्यथा ॥ -१३

मत्कृतात्मनां मय्यर्पितचित्तानाम् । भगवद्भक्तस्य एतादृशमहिमा चेद्भगवतः महिमानं को वा वक्तुं शक्नोतीत्याह ब्रह्मा —

को वेत्ति भूमन् भगवन् परात्मन्
योगीश्वरोतीर्भवतस्त्रिलोक्याम् ।
क्व वा कथं वा कति वा कदेति
विस्तारयन्क्रीडसि योगमायाम् ॥ -१४

अन्वर्थैस्सम्बोधनैर्दुर्ज्ञेयत्वमाह भूमन्नित्यादिभिः । ऊतीः लीलाः । त्रिलोक्यां को वेत्ति ? कथं वा कदा वा कति वेति अचिन्त्य तव योगमायावैभवमिति भावः । ननु भवत्ववताराणामचिन्त्यो महिमा । प्रपञ्चस्य ह्यसत्वे कथं सत्वप्रतीतिरिति इमामशङ्कां सपरिकरमुपसंहरन्परिहरति —

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।

त्वय्येव नित्यसुखबोधतनावनन्ते

मायात उद्यदपि यत्सदिवावभाति ॥ -१५

अस्तधिपणं निरस्तप्रतिभासं, त्वय्येव उद्यत् उद्भवदपि यत् नश्यत् सदिवेति, उपलक्षणमेतत् । नित्यमिव, सुखमिव, चेतनमिव, चाधिष्ठानभूतस्य भवतो गुणैस्तथा, तथा भातीत्यर्थः । त्वमेव सत्य इत्याह —

एकस्त्वमात्मा पुरुषः पुराणः

सत्यं स्वयं ज्योतिरनन्त आद्यः ।

नित्योऽजरोऽजस्रसुखो निरञ्जनः

पूर्णोऽद्वयो शक्त उपाधितोऽमृतः ॥ -१६

तस्मादेवंभूतज्ञानान्मुच्यत इत्याह । एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ।

गुर्वर्कलब्धोपनिषत्सुचक्षुषा, ये तरन्ति भवानृताम्बुधिम् ।

त्वां ये विचक्षते ॥

सम्यक् पश्यन्ति, कथं ? आत्मात्मतया, आत्मा प्रत्यक्, तस्य स्वरूपेण न चैत्रपुत्रादिष्विव गौणमित्याह सकलात्मनामपि स्वात्मानं केन ? गुरुरेवार्कः, तस्माल्लब्धमुपनिषद्ज्ञानमेव सुचक्षुः तेन । भव एवानृताम्बुधिः, तं तरन्ति । तर्तव्यस्य

च परमार्थतोऽसत्त्वादित्यर्थः । इममेव श्लोकार्थं प्रपञ्चयति श्लोकत्रयेण —

आत्मानमेवात्मतया विजानता
तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते
रज्वामहेर्भोगभवाभवौ यथा ॥ -१७

तेनैव, ज्ञानेनैव, प्रपञ्चितं प्रपञ्चं, रज्वामहेर्भोगभवाभवाविव, सर्पशरीरस्याध्यारोपापवादौ यथेति । ननु ज्ञानिनः तरन्त्येव किमिदमुच्यते तरन्तीवेति । तत्राह –

अज्ञानसंज्ञौ भवबन्धमोक्षौ
द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे
विचार्यमाणे तरणाविवाऽहनि ॥ -१८

अज्ञाने संज्ञा ययोस्तौ भवबन्धमोक्षौ । भवेन बन्धस्तन्मोक्षश्च । तौ द्वौ नाम प्रसिद्धौ । ऋतज्ञभावात्, ऋतश्चासौ ज्ञश्च, तयोर्भावः, तस्मादन्यौ न स्तः । ननु कथं महानपलापः क्रियते ? परमार्थविचारादित्याह - अजस्रेति । अखण्डेऽनुभवरूपे परे शुद्धे आत्मनि नाऽज्ञानं, न च बन्धः । अत एव च न ज्ञानं न च मोक्षः । तरणौ सूर्येऽहनीव, अहोरात्रिश्च यथेति । ननु परमात्मज्ञानादज्ञानकृतो बन्धो निवर्तताम् ।

आत्मतयैव ज्ञानादिति कोऽयमाग्रहः ? इत्याशङ्क्य, यदृच्छया-सादात्मनः पररूपा स्फूर्तिः, तदपवादेन तस्यैव ज्ञानं युक्त-मितीममर्थं विस्मयेनाक्रोशन्निवाह –

त्वामात्मानं परं मत्वा परमात्मानमेव च ।
नष्ट आत्मा बहिर्मृग्य अहो अज्ञजनाज्ञता ॥ -१९

जनसमूहस्तस्यानन्दानां सन्दोहमप्रथितुमिति । अस्यैव भगवतः स्वरूपमाह श्रीशुकः —

सत्यं ज्ञानमनन्तं यत् ब्रह्म ज्योतिस्सनातनम् ।
यद्विपश्यन्ति मुनयः गुणापाये समाहिताः ॥ -२०

नृणां निःश्रेयसार्थाय यद्व्यक्तिर्भवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ -२१

एतामेव भगवतः श्रीमूर्तिं प्रार्थयन्ते गोप्यः ।

कुर्वन्ति हि त्वयि रतिं कुशलास्स्व आत्मन्
नित्यप्रिये पतिसुतादिभिरार्तिदैः किम ।
त्वन्नः प्रसीद परमेश्वर मास्म च्छिन्द्याः
आशां धृतां त्वयि चिरादरविन्दनेत्रे ॥ -२२

कुशलाश्शास्त्रनिपुणाः । शास्त्रं किं, प्रजया करिष्याम-इत्यादि ।

त्वन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतिं त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम-
तप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ २३

ईक्षणेन यस्तीव्रः कामस्तेन तप्तचित्तानां नः, हे पुरुषरत्न, दास्यं देहि । श्रीशुकः -

तन्मनस्कास्तदालापाः तद्विचेष्टास्तदात्मिकाः ।
तत्क्षणानेव गायन्त्यः नात्मागाराणि सस्मरुः ॥ -२४

नन्वेवद्भगवतः, बन्धायैवेत्याशङ्क्य कैमुतिकन्यायेन परिहरति –

यत्पादपङ्कजपरागनिषेवतृप्ताः
योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि ननह्यमानाः
तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ -२५

यस्य पदपङ्कजपरागस्य निषेवणतृप्ताः, ननह्यमानाः बन्धं न प्राप्नुवन्ति, तस्य भगवतः बन्धः कुतस्स्यात् न कस्मादित्यर्थः । अत एव स्तौति नारदः —

त्वमात्मा सर्वभूतानां एको ज्योतिरिवैधसाम् ।
गूढो गुहाशयस्साक्षी महापुरुष ईश्वरः ॥ -२६

न हि त्वं जीववत्परिच्छिन्नः, किन्तु सर्वभूतानामन्तः एकोऽनुस्यूतः आत्मा। अन्तरनुस्यूतत्वे दृष्टान्तः, एधसां काष्ठानामन्तः ज्योतिरिवेति। भूतेषु स्थितोऽपि तैर्न दृश्यत इत्याह गूढ इति अत्र हेतवः गुहाशयः बुद्धेरप्यन्तरः इत्यादयः।

विशुद्धविज्ञानघनं स्वसंस्थया
समाप्तसर्वार्थममोघवाञ्छितम्।
स्वतेजसा नित्यनिवृत्तमायया
गुणप्रवाहं भगवन्तमीमहि॥ -२७

केवलज्ञानैकमूर्तिं तयैव स्वसंस्थया स्वरूपसम्यक्स्थित्यैव परमानन्दस्वरूपया, सम्यगाप्ताः प्राप्ताः सर्वेऽर्था येन तं। आप्तकामतोक्त्या सत्यसङ्कल्पतामाह अमोघवाञ्छितमिति। ननु वाञ्छा चेदस्ति तर्हि दुर्निवारैव संसृतिः। अत आह स्वतेजसेति। स्वतेजसा चिच्छक्त्या, नित्यं निवृत्तः मायाकार्यरूपः गुणप्रवाहः यस्मात्तं। अतो भगवन्तं निरतिशयैश्वर्यं ईमहि शरणं व्रजेमेति। एवं स्तुत्वा तं भगवन्तं प्रति बन्धमोक्षं प्रार्थयितुमाह अक्रूरः —

भगवञ्जीवलोकोऽयं मोहितस्तव मायया।
अहंममेत्यसद्ग्राहः भ्राम्यते कर्मवर्त्मसु॥ -२८

असति देहादौ ग्राहः आग्रहः यस्य सः। न केवलमयं लोकः, अहमपि तथैवेत्याह —

अहं चात्मात्मजागारदारार्थं स्वजनादिषु ।
भ्रमामि स्वप्नकल्पेषु मूढस्सत्यधिया प्रभो ॥ -२९

मूढत्वमेव प्रकटयति

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ।
द्वन्द्वारामस्तमोविष्टो न जाने त्वां मनःप्रियम् ॥ -३०

अनित्ये कर्मफले नित्यमिति, अनात्मनि देहादौ आत्मेति, दुःखरूपे गृहादौ सुखमिति, विपर्यस्ता मतिः यस्य सः। ननु कुतो रतिः ? तत्राह तमोविष्टः तमसा व्याप्तः। आत्मनः प्रियं प्रेमास्पदं त्वां न जाने इत्यर्थः। सदृष्टान्तमाह —

यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ।
अभ्येति मृगतृष्णां वै तद्वत्त्वाऽहं पराङ्मुखः ॥ -३१

तस्माज्जलादुद्भवन्तीति तदुद्भवानि तृणादीनि तैः। तथा मायाछन्नं त्वामहं हित्वा पराङ्मुखः देहाद्यभिमुखः वर्ते इत्यर्थः। ननु एवं जानतः कुतो विषयाभिमुख्यं ? तत्राह —

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ।
रोद्धुं प्रमाथिभिस्त्वाक्षैः ह्रियमाणमितस्ततः ॥ -३२

कृपणा विषयवासनायुक्ता धीर्यस्य। अत एवान्तः कामकर्मभ्यां हतं क्षुभितं, इन्द्रियैश्च बलिभिर्विषयसंयुक्तैरितस्ततः आकृष्यमाणं, रोद्धुं नियन्तुं न शक्नोमि ।

सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं
तच्चाप्यहं भवदनुग्रह ईश मन्ये ।
पुंसो भवेद्यर्हि संसरणापवर्गः
त्वय्यब्जनाभ सदुपासनया मतिस्स्यात् ॥ -३३

एवमस्वतन्त्रो यः, सोऽहं तवाङ्घ्रि उपगतः अङ्घ्रिमुपगतः, शरणं प्राप्तः । ननु इन्द्रियपरतन्त्रस्य तदपि कुतः ? तत्राह— तच्चापीति । हे ईश, अन्तर्यामिन्, तच्च तेऽङ्घ्र्युपगमनं असतां दुरापम् । अतो भवदनुग्रह एवेत्यहं मन्ये । ननु सतां सेवया इह भवति, किं मदनुग्रहेण ? इत्यत आह पुंस- इति । जीवस्य संसारस्यापवर्गस्समाप्तिः, यदा त्वत्कृपया न भवेत् सम्भावनास्पदं भवति । हेऽब्जनाभ, तदा सदुपासना सम्पद्यते । तदा तस्यैव त्वयि मतिर्भवेत् । त्वत्कृपां विना सत्सेवा न तरां, त्वन्मतिः न तमां, मुक्तिरित्यर्थः । अत एवाहुर्गोप्यः —

यदनु चरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्माऽविनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीनाः
बहव इव विहङ्गाः भिक्षुचर्यां चरन्ति ॥ -३४

अस्यानुचरितमेव लीला, तदेव कर्णपीयूषं, तस्य विप्रुट् कणिका तस्यास्सकृददनं सेवनं, तेन विधुतानि निरस्ता द्वन्द्व-

धर्माः रागादयः येषां ते । ते च तेऽविनष्टाश्चेति समासः । इतरे पुनर्द्वन्द्वधर्माणः विनष्टा एव । सपदि तत्क्षणमेव, दीनं तुच्छम् । गृहसहितं कुटुम्बं विहाय, 'दीनाः अकिञ्चनाः धीरा इति वा । बहवो विहङ्गाः हंसा इव सारासारविवेकचतुराः, भिक्षुचर्यां परमहंसचर्यां चरन्ति । तस्मात् परपुरुषार्थहेतुत्वात् भगवदनुग्रह एव प्रार्थनीय इति । त्वद्भक्तस्य सकलबन्धनिवृत्तौ, तव बन्धशङ्कैव नास्तीति पुनरपि स्तौति अक्रूरः —

सृजस्यधो लुम्पसि पासि विश्वं
रजस्तमस्सत्वगुणैस्स्वशक्तिभिः ।
न बध्यते तद्गुणकर्मभिर्वा
ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ -३५

तद्गुणकर्मभिर्वा तैः गुणैः कर्मभिर्वेत्यर्थः । यतः, क्व च कदाचिदपि बन्धहेतुरविद्या, तव नास्ति । कुत इत्यत आह ज्ञानात्मन इति । मायाया आश्रयानावारकत्वादिति भावः । किञ्च,

देहाद्युपाधेरनिरूपितत्वात् ,
भवो न साक्षाच्च भिदात्मनस्स्यात् ।
अतो न बन्धस्तव नैव मोक्षः
स्यातां निकामस्त्वयि नो विवेकः ॥ -३६

भवो जन्म, तन्मूला भिदा च, साक्षात्स्वरूपः न स्यादिति । ननु बन्धाभावं वदता त्वया किं मोक्षोऽङ्गीकृतः ? ओमिति चेत्तर्हि बन्धाभावे मोक्षासम्भवात्, असन्नो बन्धोपीत्याशङ्क्याह अत इति । यतः नाविद्या, अतो न बन्धो मोक्षश्च । एवमुभौ न स्यातामित्यर्थः । ननूलूखले बद्धं मां श्रुतवान् यमुनाह्रदे तु मुक्तं दृष्टवानसि । अतः कथमुभयं नास्ति ? अत आह निकाम इति । स्वाभिप्रायानुरूपं त्वयि नः अस्माकं विवेक एव तवोभौ स्यातामिति । अतः परमार्थतस्त्वयि न किञ्चिदस्तीति भावः ।

दिष्ट्या जनार्दन भवानिह प्रतीतः
योगेश्वरैरपि दुरापगतिस्सुरेशैः ।
छिन्ध्याशु नः सुतकलत्रधनाप्तगेह-
देहादिमोहरचनां भवदीयमायाम् ॥ -३७

एवं लब्धभगवदनुग्रहोऽक्रूरः धृतराष्ट्रं प्रति तत्वमुपदिशन्नाह —

नेह चात्यन्तसंवासः कस्यचित्केनचित्सह ।
राजन्, स्वेनापि देहेन किमु जायात्मजादिभिः ॥ -३८

अत्यन्तं नित्यसंवासः सम्यगवस्थितिः ।

तस्माल्लोकमिदं राजन्, स्वप्नच्छाया मनोरथम् ।
वीक्ष्यायम्यात्मनात्मानं समश्शान्तो भव प्रभो ॥ -३९

स्वप्नच्छाया मनोरथश्च । तत्तेन तुल्यं । आयम्य नियम्य शान्तस्सन् समो भवेति । एवं भगवद्भक्तानां भवापवर्गो वर्णितः ।

अथाभक्तानां संसारमष्टभिः प्रपञ्चयन्स्तौति मुचुकुन्दः –

विमोहितोऽयं जन ईश मायया
त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित्पुरुषेषु वञ्चितः ॥ -४०

हे ईश, योषित् पुरुषश्चेति द्विविधोऽप्ययं जनः, त्वदीयमायया मोहितः, अनर्थदृक्, अर्थं परमार्थसुखं त्वां न पश्यतीत्यनर्थदृक्, अतस्त्वां न भजति, किन्तु परस्परं वञ्चितस्सन् सुखेच्छया, दुःखानामेव प्रभवः येषु, तेषु गृहेष्वेव सज्जत इति । किञ्च, कामसुखं सूकरादिष्वपि सम्भवति । भगवद्भजनं तु न मानुषव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्न मूढ इत्याह –

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथञ्चिदव्यङ्गमयत्नतस्तव ।
पदारविन्दं न भजत्यसन्मतिः
गृहान्धकूपे पतितो यथा पशुः ॥ -४१

अत्र कर्मभूमौ, अव्यङ्गं विकलाङ्गम् । किञ्च, असति विषय-सुखे मतिर्यस्य सः । गृहमेवान्धकूपस्तस्मिन् । पतितः यथा पशुः, तृणलुब्धः अन्धकूपे पतति । न केवलमस्य जनस्य इय गतिः, किन्तु ममापि तथैवेत्याह –

ममैष कालोऽजित निष्फलो गतः
राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मऽऽत्मबुद्धेस्सुतदारकोशे-
ष्वासज्जमानस्य दुरन्तचिन्तया ॥ -४२

मर्त्ये शरीरे आत्मबुद्धिः यस्य, मम, अत एव सुतादिष्वासज्ज-मानस्य । उन्नद्धमदत्वं प्रपञ्चयति —

कलेवरेऽस्मिन् घटकुड्यसन्निभे
निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैः
गां पर्यटंस्त्वामगणय्य दुर्मतिः ॥ -४३

घटकुड्यादिसदृशे देहात्मनि यत एवं दुर्मतिः आसं, अतः एष कालो निष्फलो गत इति ।

त्वामगणयन् तत्त्वमाक्रमसीत्याह —

प्रमत्तमुच्चैरिति कृत्यचिन्तया
प्रवृद्धलोभं विषयेषु लालसम् ।

त्वमप्रमत्तस्सहसाभिपद्यसे

क्षुल्लेलिहानोऽहिरिवाऽऽखुमन्तकः ॥ -४४

प्रमत्तं अनवहितं, अन्तकं त्वामविगणय्य देहादिष्वासक्तमिति यावत्कृतः इति कृत्यचिन्तया एवमेव करिष्यामीति मनोरथ-परम्परया मनोरथे भग्नेऽपि विषयेषु लालसं उत्सुकं, प्राप्तेऽपि प्रवृद्धः लोभः तृष्णा यस्य तं, अन्तकं त्वमभिपद्यसेऽभिभवसीत्यर्थः । क्षुधा सृक्विणी लेलिहानः अहिः, आखुं मूषिकमिवेति । किञ्च, कालात्मना त्वया अभिपन्नो देहः एवं भवतीत्याह —

पुरा रथैर्हेमपरिष्कृतैश्चरन्

मतङ्गजैर्वा नरदेवसंस्थितः ।

स एव कालेन दुरत्ययेन मे

कलेवरो विट्क्रिमिभस्मसंज्ञितः ॥ -४५

श्वशृगालादिभिर्भक्षितः विट्संज्ञितः, अभक्षितः क्रिमिसंज्ञितः दग्धः भस्मसंज्ञितः । किञ्च, अन्तकप्राप्तेः प्रागपि, दिग्विजयेन राज्ञोऽपि पारतन्त्र्यं तदवस्थमेवेत्याह –

निर्जित्य दिक्चक्रमभूतविग्रहः

वरासनस्थस्समराजवन्दितः ।

गृहेषु मैथुन्यसुखेषु योषितां

क्रीडामृगः पूरुष ईश नीयते ॥ -४६

अभूतविग्रहोऽविद्यमानसङ्ग्रामः, पूर्वं ये समास्तै राजभिर्वन्दितः मिथुनी भावसुखं परं येषु, तेषु योषितां गृहेषु, क्रीडामृग-इव इतस्ततो नीयते। किञ्चातितृष्णाकुलस्य न भोगलक्षणः कश्चिदस्तीत्याह —

करोति कर्माणि तपस्सुनिष्ठितो
निवृत्तभोगस्तदपेक्षया दधत्।
पुनश्च भूयासमहं स्वराडिति
प्रवृद्धतर्षो न सुखाय कल्पते ॥ -४७

तपसि अधश्शयनब्रह्मचर्यादौ, सुनिष्ठितः पुनः स्वराट् इन्द्रस्स्यामिति, यद्वा जन्मान्तरेऽपि एवमेव चक्रवर्ती स्यामिति ॥ तदेवमष्टभिः श्लोकैरीश्वरबहिर्मुखानां संसारं प्रपञ्च्य, भक्त्या तन्निवृत्तिक्रममाह —

भवापवर्गो भ्रमतो यदा भवेत्
जनस्य, तर्ह्यच्युत सत्समागमः।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥ -४८

भो अच्युत, संसारतः जनस्य यदा त्वदनुग्रहेण भवस्य बन्धस्य अपवर्गः अन्तर्भवेत् प्राप्तकाले स्यात्तदा सतां सङ्गमो भवेत्। तदा सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्तिर्भवति ततः मुच्यत इत्यर्थः। मम तु सत्सङ्गात् पूर्वमेव यो

राज्यादिसङ्गविच्छेदो जातः, सोऽयं त्वया महाननुग्रहः कृत इत्याह —

मन्ये ममानुग्रह ईश ते कृतो
राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया
वनं विविक्षद्भिरखण्डभूमिपैः ॥ -४९

ते त्वया, साधुभिर्विवेकिभिः, तपसे वनं विवेष्टुमिच्छद्भिः, स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति । तदेवं, विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान्वृणीष्वेति यदुक्तं तत्रोत्तरमाह —

न कामयेऽन्यं तव पादसेवनात्
अकिञ्चनाः प्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्यो परमात्मबन्धनम् ॥ -५०

अकिञ्चना निवृत्ताभिमानाः । आर्यो विवेकी ।

तस्माद्विसृज्याशिष ईश सर्वशः
रजस्तमस्सत्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ -५१

रजस्तमस्सत्त्वगुणैरनुवध्यन्त इति । तथैश्वर्यादिशत्रुमरणादि-धर्मरूपाः । विसृज्य, परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनं, तत्कुतः ? तन्निरञ्जनं, तत्कुतः ? निर्गुणं, तदपि कुतः ? अद्वयं, अत एव अक्षरं त्वां शरणं व्रजामीति । "भुङ्क्ष्व भोगान्, कैवल्यं तु करस्थमेव" इति पुनर्वरैः प्रलोभयन्तं पादोपसङ्ग्रहेण प्रार्थयते —

चिरमिह वृजिनार्त्तस्तप्यमानोऽनुतापै:
अवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
अभयमृतमशोकं पाहि माऽऽपन्नमीश ॥ -५२

आर्तः पुनस्तद्वासनाभिस्तप्यमानः, तथापि अवितृषषडमित्रो न विगताः तृष्णाः षडमित्राः शत्रवः इन्द्रियलक्षणा यस्य सः अत एवालब्धशान्तिः, कथञ्चिद्दैववशेन लब्धा शान्तिरिति वा, शरणं स्वज्ञानं ददातीति हे शरणद, समुपेतः प्राप्तोऽहं, अशोकत्वे हेतुरभयं, तत्रापि हेतुः ऋतं, आपन्नं आपदा व्याप्तम् ।

श्रीभगवान् –

विचरस्व महीं काममनावेशितमानसः ।
अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ -५३

तुभ्यं तत्र । अथेदानीं भ्रातृवैरूप्यचिन्तया शोचन्तीं रुक्मिणीं सान्त्वयति बलरामः —

आत्ममोहो नृणामेष कल्प्यते देवमायया ।
सुहृच्छत्रुरुदासीनः इति देहात्मवादिनाम् ॥ -५४

परमार्थमाह –

एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ।
नानेव गृह्यते मूढैः यथा ज्योतिर्यथा नभः ॥ -५५

परश्शुद्धः । ज्योतिश्चन्द्रादिः यथोदकेषु, नभो यथा घटादिष्विति कुतस्तर्हि न चन्द्रादिव तदात्मानं शुद्धत्वं च प्रतीतस्तत्राह —

देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः ।
आत्मन्यविद्यया क्लृप्तिः संसारो यत्र देहिनाम् ॥ -५६

द्रव्यमधिभूतं, प्राणा इन्द्रियाणि, अध्यात्मं, गुणशब्देनाधिदैवतं तत्र तदात्मकः देहोपाधिना न शुद्धः न प्रतीयत इत्यर्थः । ननु देहसम्बन्धेनापि संसारे सति, शुद्धत्वं गतमेव, तत्राह –

आत्मनोऽन्येन संयोगो वियोगश्चासता सति ।
तद्धेतुत्वात्तत्प्रसिद्धेः दृग्रूपाभ्यां यथा रवेः ॥ -५७

हे सति, अन्येनाधिभूतादिना, आत्मनस्संयोगवियोगौ न स्तः । कुतः असताऽसत्त्वादन्यस्येत्यर्थः । कुतोऽसत्त्वं तत्राह – तद्धेतु-

त्वादिति । तस्यान्यस्य भूतेन्द्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वाज्ञातनहेतुत्वात् । ननु देवैरधिष्ठितेभ्यः इन्द्रियेभ्यः भूतानां प्रतीतिः प्रसिद्धा भूतप्रतीत्या च तत्प्रतीतिर्नात्मन इत्यत आह दृग्रूपाभ्यां यथा रवेः । यथा प्रकाशस्य प्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात्प्रसिद्धिः, द्वयोरपि तैजसत्वात्, अभेदश्च । तथा भूतेन्द्रियादीनां परस्पराधीनसिद्धानामपि चैतन्याधीन एव प्रकाशः । तत्कार्यत्वात् । तद्व्यतिरेकेणासत्वं चेत्यर्थः । तथा च द्वादशे वक्ष्यति ।

"दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ।
एवं धीदुःखमात्राश्च न स्युरन्यास्समावृत्ताः ॥" इति । -५८

यद्वा, प्रसिद्धाभ्यामेतद्रूपाभ्यां परस्परसिद्धिर्यथा, तद्वदिति । देहसम्बन्धाभावादेव नात्मनः जन्मादयोपीति वक्तुं, जन्मादीनां देहधर्मत्वमाह —

जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ।
कलानामिव नैवेन्दोः मृतिर्यस्य कुहूरिव ॥ -५९

देहजन्मादिनैवास्यात्मनः जन्मादिरिति सदृष्टान्तमाह कलानामेव जन्मादयः, नेवेन्दोः, यथा तद्वच्च । यथा कलानाशादेव कुहूः अमावास्या इन्दुक्षय उच्यते । तद्वत्तस्यात्मनः देहनाशादेव मृतिव्यवहार इत्यर्थः । नन्वात्मनः देहसम्बन्धाभावे कथं भोक्तृत्वभोगभोग्यप्रतीतिः ? इत्याशङ्क्य स्वप्नदृष्टान्तेन समर्थयते

यथा शयानमात्मानं विषयान्फलमेव च ।
अनुभुङ्क्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवम् ॥ -६०

आत्मानं भोक्तारं, विषयान्भोग्यान्, फलं भोगं, असत्यर्थे अनुभुङ्क्ते । तथाऽबुधस्संसारं प्राप्नोतीति ।

तस्मादज्ञानजं शोकं आत्मशोकविमोहनम् ।
तं च ज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ ६१

आत्मानं शोषयति, विमोहयति चेति । तथा तन्निर्हृत्यापहृत्य । अथेदानीं जरासन्धेन निरुद्धान्राज्ञो मोचयित्वा, तैस्स्तुतः श्रीभगवान् तान्प्रति तत्त्वमुपदिशति —

उदासीनाश्च देहादौ आत्मारामा धृतव्रताः ।
मय्यावेश्य मनस्सम्यक् मामन्ते ब्रह्म यास्यथ ॥ -६२

नन्वेवं निग्रहानुग्रहयोः प्रवृत्तस्य मम तेजोहानिस्स्यादित्याशङ्क्य, परिपूर्णस्य तव तेजसो न वृद्धिः, न हानिश्च । अतः कृपया सर्वं सङ्गच्छत इत्याह श्रीकृष्णं प्रति युधिष्ठिरः —

न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ -६३

एकस्याद्वितीयस्य समानासमानरहितस्य ब्रह्मणः तवानुग्रहादिभिः कर्मभिः तेजो न वर्धते, न च ह्रसते, रवेरिव उदयास्त-

मयादिकर्मभिरित्यर्थः। सभायां कः पूज्यत इत्यपेक्षायां सर्वात्मकब्रह्मरूपत्वात् श्रीकृष्ण एव पूज्य इत्याह सभ्यान्प्रति सहदेवः –

एक एवाद्वितीयोऽसौ ऐतदात्म्यमिदं जगत् ।
आत्मानात्माश्रयस्सभ्याः सृजत्यवति हन्त्यजः ॥ -६४

अथ कुरुक्षेत्रे सुहृदो नन्दयित्वा, तत्त्वज्ञानमुपदिशति वसुदेवं प्रति श्रीकृष्णः -

आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ।
आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ -६५

अथ कंसेन हतानजुजातानाहर्तुं पातालं प्रविष्टं श्रीकृष्णं स्तौति बलिः:—

त्वन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्-
पादारविन्दधिषणान्यगृहान्धकूपात् ।
निष्क्रम्य, विश्वशरणाङ्घ्र्युपलब्धवृत्तिः
शान्तो यथैक उत सर्वसखैश्चरामि ॥ -६६

त्वं नः प्रसीद । यदा निरपेक्षैराप्तकामैरपि, विमृग्यं युष्मत्पादारविन्दं, तदेव धिषणमाश्रयः, तस्मादन्यत् यद्गृहं, तदेवान्धकूपः, तस्मान्निष्क्रम्य निर्गत्य। विश्वस्य शरणं रक्षितारः

वृक्षाः, तेषामङ्घ्रिषु मूलेषु, स्वत एव गलितैः फलादिभिः, उपलब्धा प्राप्ता वृत्तिर्येन, सोऽहं शान्तस्सन् एक एव चरामि। अथवा, सर्वेषां सखायः महान्तः, तैस्सह चरामीति। अथ श्रुतयो देहाभिमानिनः अनुक्रोशन्त्यो जगदात्मनीश्वरे रतिमुपदिशन्ति –

त्वदनुपदं कुलायमिदं आत्मसुहृत्प्रियवच्चरन्ति
अप्योन्मुखे प्रियहिते त्वयि आत्मनि च।
न बत रमन्त्यहो सदुपासनयाऽऽत्महनः
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः॥ -६७

त्वदनुपदं त्वदनुवृत्ति त्वत्सेवौपाधिकमिदं कुलायं शरीरं, आत्मसुहृत् प्रियवत्, आत्मा च सुहृच्च प्रियश्च तद्वच्चरन्ति, स्वाधीनतया वर्तत इत्यर्थः। तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि। चाप्यर्थे चकारः। एवंभूते सुखसेव्ये, बत, अहो कष्टं न रमन्ति न भजन्ति। असदुपासनया देहाद्युपलालनेन, आत्महनः प्रमादिनः। कुतः? यदनुशयाः, यस्यां देहाद्युपासनायामनुशयः वासना येषां ते। कुशरीरभृतः सन्तः, उरुभये संसारे भ्रमन्ति परिवर्तन्ते। अतः आत्महन इति भावः।

॥ इति दशमस्कन्धसारसङ्ग्रहः ॥

**

## ॥ अथ एकादशस्कन्धसारसङ्ग्रहः ॥

पूर्वं देहाभिमानिनो निन्दित्वा, तदितरेषां भगवति रतिरुक्ता । इदानीं तामेव प्रपञ्चयितुमाहुः विदेहं प्रति नवयोगिनः —

शृण्वन्सुभद्राणि रथाङ्गपाणे
जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन्विलज्जो विचरेदसङ्गः ॥ -१

तदर्थकानि तानि नामानि कर्माणि चार्थो येषां, तानि एतान्यपि सङ्कल्पेन ज्ञातुमशक्यानीत्याह यानि लोके गीतानि प्रसिद्धानि तानि शृण्वन्, गायंश्च विचरेत् । असङ्गः निस्स्पृहः । एवं च भजतस्संप्राप्तप्रेमलब्धभक्तियोगस्य संसारधर्मातीतां गतिमाह —

एवंव्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यसौ रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ॥ -२

एवं व्रतं वृत्तं यस्य सः । स्वप्रियस्य हरेर्नामकीर्त्या, जातो रागो प्रेम यस्य सः । अत एव द्रुतचित्तः श्लथहृदयः,

कदाचित् भक्तपराजितं भगवन्तमाकलय्य उच्चैर्हसति । एतावन्तं कालं उपेक्षितोऽसीति रोदिति । औत्सुक्याद्रौति क्रोशति, अतिहर्षेण गायति । जितं जितमिति नृत्यति क्रीडत्यर्भकवत्, परान्प्रति प्रकाशयितुं न, उन्मादवद्ग्रहगृहीत इव । लोकबाण्या विवशः । इममेवार्थमाह —

क्वचिद्रुदन्त्यच्युत चिन्तया क्वचित्
हसन्ति नन्दन्त्यथ वालौकिकानि ।
नृत्यन्ति गायन्ति न शीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ -३

इत्थं भगवति रतिं प्रपञ्च्य, को वा भागवत इत्यपेक्षायामाह चतुर्भिः —

सर्वभूतेषु यः पश्येत् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येषु भागवतोत्तमः ॥ -४

आत्मनः स्वस्य सर्वभूतेषु भगवद्भावं ब्रह्मभावेन समन्वयं यः पश्येत्, तथा ब्रह्मभूतेऽधिष्ठाने आत्मनि भूतानि च यः पश्येत् स भागवतोत्तम इत्यर्थः ।

गृहीत्वापीन्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥ -५

देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ -६

देहादीनां संसारधर्मैः जन्माप्ययादिभिः यः श्रीहरेः स्मृत्या, अविमुह्यमानः स भागवतप्रधानः । तत्र देहस्य जन्माप्ययौ, प्राणस्य क्षुत्, मनसो भयं, बुद्धेस्तर्षः तृष्णा, इन्द्रियाणां कृच्छ्रं श्रमः ।

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहम्भावो देहे वै स हरेः प्रियः ॥ -७

जन्म भूलं, कर्म तपः आदि । जातयः अनुलोमप्रतिलोमजाः मूर्धावसिक्तादयः । अस्मिन्देहेऽहङ्काररहितस्सन् कुलतप-आदिलिङ्गैः । श्रीहरेः प्रियो भवतीत्यर्थः । अथोर्ध्वं मुख्याधिकारिणं मत्वा ज्ञानमुपदिशति श्रीकृष्णः —

त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धनम् ।
मय्यावेश्य मनस्सम्यक् समदृग्विचरस्व गाम् ॥ -८

ननु गुणदोषाभ्यां विषमे लोके कुतस्समदृष्टिरस्यामत आह —

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ -९

मनःआदिभिर्गृह्यमाणं मनोमयत्वात् मायेति । तदपि न स्थिरं, किन्तु नश्वरं विद्धि । मायाया मनोमयत्वे हेतुमाह —

पुंसोऽयुक्तस्य नानार्थो भ्रमस्स गुणदोषकृत् ।
कर्माकर्मविकर्मेति गुणदोषधियोऽभिधा ॥ -१०

अयुक्तस्य विक्षिप्तमनसः नानार्थभेदविषयः भ्रमः। स एव गुणदोषभाक्। ननु वेदेनैव विधिनिषेधाभ्यां सत्तोक्ता? न, भ्रमविजृम्भितगुणदोषबुद्धेः पुंसः कर्म विहितं, अकर्म तल्लोपः, विकर्म निषिद्धमिति भेदः। अविद्यावद्विषय एव वेद इत्यर्थः। नन्वेवं युक्तायुक्तस्य कर्मानाचरणे देवादयो विघ्नान् करिष्यन्ति तत्राह —

ज्ञानविज्ञानसंयुक्त आत्मभूतश्शरीरिणाम्।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यते॥ -११

ज्ञानं वेदतात्पर्यनिश्चयः। विज्ञानं तदर्थानुभवः। ताभ्यां सम्यग्युक्तः। ततश्चात्मानुभवेनैव तुष्टचित्तः। अतश्शरीरिणां देवादीनामात्मभूतः अन्तरायैर्न प्रतिहन्यते। तथा च श्रुतिः "तस्य ह देवाश्च नाभूत्या ईशते। आत्मा ह्येषां स भवती"ति। एवंभूतस्य न पुनस्संसार इत्याह —

सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः।
पश्यन्मदात्मकं सर्वं न विपद्येत वै पुनः॥ -१२

न विपद्यते, न पुनस्संसरते। उक्तार्थे संवादं दर्शयति —

अवधूतं द्विजं कश्चित् चरन्तमकुतोभयम्।
कविर्निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित्॥ -१३

त्वं तु कल्यः कविर्दक्षः सुभगो मितभाषणः।
न कर्ता नेहसे किञ्चित् जडोन्मत्तपिशाचवत्॥ -१४

त्वं तु न कस्यचित्कर्मणः कर्ता भवसि, न किञ्चिदिच्छसि । महानानन्दश्च तव कुत इति पृच्छति —

जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना, मुक्तः गङ्गाम्भस्स्थ इव द्विपः ॥ -१५

त्वं हि नः पृच्छतां ब्रह्मन् नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ १६

स्पर्शविहीनस्य विषयभोगरहितस्य, तत्र हेतुः केवलात्मनः कलत्रादिशून्यस्य । ब्राह्मणः –

सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽहमिह तान् शृणु ॥ -१७

बुद्ध्यैवोपाश्रिताः स्वीकृताः, न तूपदेशेन । तान्पृथिवीवाय्वादीन् । क्षितेः क्षमामङ्गीकृतवानित्याह —

भूतैराक्रम्यमाणोऽपि धीरश्चैव वशानुगैः ।
तद्विद्वान्न चलेन्मार्गान्नन्वशिक्षन्क्षितेर्व्रतम् ॥ -१८

आक्रम्यमाणः पीड्यमानः, तद्विद्वान् भूतानां दैववशत्वं विद्वान् व्रतं नियमम् । वायुर्द्विविधः प्राणो बाह्यश्च । तत्र प्राणस्य गुरुत्वमाह –

प्राणवृत्त्यैव सन्तुष्येत् मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ -१९

प्राणेन हि, आहारादिमात्रेणैव वर्तते, रूपरसादीन् इन्द्रियविषयांस्तु नापेक्षते । तथा मुनिरपि भवेदित्यर्थः । प्राणवृत्तेन करणेन मनोवैकल्येन ज्ञाननाशस्स्यादतः देहनिर्वाहः कर्तव्यः । गुणलिप्सायां मनश्चक्षुषी वध्येयाताम् । अतः नाधिकं लिप्सेदित्याह ज्ञानमिति । नावकीर्येत न विक्षिप्येत । विषयान्सेवमानोऽपि तेष्वनासक्तिः । वाह्याद्वायोः शिक्षेदित्याह -

विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ -२०

नानाधर्मेषु शीतोष्णादिधर्मेषु न हि वायुः वने दहने वा सज्जते तद्वत् । आकाशाच्छिक्षितमाह —

अन्तर्हितश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याऽव्यवच्छेदमसङ्गतात्मनः
मुनिर्नभस्त्व विततस्य भावयेत् ॥ -२१

अन्तर्हितश्च स्थिरजङ्गमेषु समन्वयेन व्याप्तिः तया । किं मणिषु सूत्रस्येव व्याप्तिर्न, विततस्य सर्वगतस्य । तत्कुतः । ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया । "तत्त्वमसी" ति श्रुतेः । स्वच्छतादिभिर्गुणैरुदकं जगत्पुनातीति, तद्गुणा मया शिक्षिता-इत्याह -

स्वच्छः प्रकृतितस्स्निग्धः मधुरस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्यपां मित्रं ईक्षास्पर्शनकीर्तनैः ॥ -२२

स्वच्छो निर्मलः, प्रकृतितस्स्वभावतः, स्निग्धो जनेष्वनुरागवान्, मधुरो मधुरालापी, तीर्थभूः तीर्थानामाश्रमस्थानं, अपां मित्रं उदकतुल्यः, अवादिति पाठे सोऽयं पापात्पुनाति । स्वच्छत्वादिगुणैस्सर्वात् उदकसादृश्य ज्ञातव्यम् । अग्नेश्शिक्षितमाह –

तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते पापमग्निवत् ॥ -२३

तेजस्वी ज्ञानातिशयवान्, न विशेषतः तपसा दीप्तः, दुर्धर्षः अक्षोभ्यः स चासावुदरभाजनश्च । अपरिग्रहः युक्तात्मा । अग्नेरेव शिक्षान्तरमाह —

क्वचिच्छन्नः क्वचित्स्पष्टः उपास्यश्श्रेय इच्छता ।
भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराऽशुभम् ॥ -२४

यथाग्निः परेच्छयैव हविर्गृह्णाति तथा मुनिरित्याह दातॄणामिति प्रागुत्तराऽशुभं, भूतं भविष्यच्च पापं । आत्मनः जन्मादिषड्भावः विकाराभावश्च दृष्टान्तेन सम्भावित इत्याह –

विसर्गाद्याः श्मशानान्ता भावा देहस्य, नात्मनः ।
कलानामिव चन्द्रस्य कालेनोच्यन्त वर्त्मणा ॥ -२५

विसर्गः जन्म श्मशानं नाशः । आदित्याच्छिक्षितमाह –

गुणैर्गुणानुपादत्ते यथा काले विमुञ्चति ।
न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ -२६

गुणैरिन्द्रियैः गुणान्विषयानुपादत्ते । यथा कालेऽभ्यागते सति अर्थं विमुञ्चति । न तेषु युज्यते । लब्धमिदमिति अभिनिवेशं न करोति। गोभिः रश्मिभिः गा जलानि गोपतिस्सूर्यः यथा। कपोतात् शिक्षितमाह --

नातिस्नेहः प्रसङ्गे वा कर्तव्यः केनचित्क्वचित् ।
कुर्वन्विन्देत सन्तापं कपोत इव दीनधीः ॥ -२७

प्रसङ्गः उपलालनाद्यासक्तिः । प्रारब्धकर्मभोगस्यावश्यंभावित्वात् अर्थोद्यमैर्नायुर्व्ययः वृथा कर्तव्य इति। अजगराच्छिक्षितमाह –

ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ।
यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥ -२८

आजगरः, अजगरवृत्तिः, अक्रियः तावन्मात्रेऽप्युदासीनः । यदा नापतति तदा किं कर्तव्यमित्याह –

शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।
यदि नोपरमेद्ग्रासः महाहिरिव दिष्टभुक् ॥ -२९

अनुपक्रमः निरुद्यमः। दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान्। समर्थोऽपि शयीतैव किं? ओमित्याह --

ओजस्सहो बलयुतं बिभ्रद्देहमकर्मकम् ।
शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ -३०

ओजः इन्द्रियबलं सहः मनोबलं, बलं शारीरमेव वा, तद्युक्तमपि देहमकर्मकमेव बिभ्रत् शयान एव, भवेत् । वीतनिद्रः स्वार्थे दत्तदृष्टिश्च भवेत् । न पुनरीहेत । इन्द्रियवानपि । दर्शनादिव्यापारमपि निवारयति । समुद्राच्छिक्षितमाह —

मुनिः प्रसन्नगम्भीरः दुर्विगाह्यो दुरत्ययः ।
अनन्तपारो ह्यक्षोभ्यः स्तिमितश्च इवार्णवः ॥ -३१

बहिः प्रसन्नश्चासावन्तर्गम्भीरश्च । दुर्विगाह्यः एवंभूत इति परिकलयितुमशक्यः । अलक्ष्याभिप्रायत्वाद्दुरत्ययः । अनतिक्रमणीयः तेजस्वित्वात् । अनन्तपारः कालतो देशतश्चाप्यपरिच्छेद्यः । स्वरूपाविर्भावित्वादक्षोभ्यः । अविकार्यः रागाद्यभावात् । स्तिमितोदः निश्चलाङ्गोऽर्णवो यथा तद्वदेतैर्गुणैः निश्चलो भवेदित्यर्थः । किञ्च,

समृद्धकामस्तद्धीनो नारायणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ -३२

रूपविलासमोहितो नश्यतीति पतङ्गाच्छिक्षितमित्याह —

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितो पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ -३३

मधुकराच्छिक्षितमाह —

स्तोकं स्तोकं ग्रसन्ग्रासं देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेत् वृत्तिं माधुकरीं मुनिः ॥ -३४

गृहानहिंसन् अपीडयन् ।

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतस्सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ -३५

सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षितम् ।
पाणिपात्रोदरामत्रः मक्षिकेव न सङ्ग्रहः ॥ -३६

सायं इदं भिक्षामिति । भिक्षितमन्नादीन् । न संगृह्णीत । किन्तु पाणिपात्रः, तन्मात्रग्राही, यद्वा उदरमेवामत्रं यस्य सः । एकभिक्षायामुदरमात्रग्राही भवेत् । सङ्ग्रहीता मक्षिकेव नश्यतीत्यर्थः । "स्पर्शासक्तिर्नाशहेतुरि" ति गजाच्छिक्षितमाह –

पदापि युवतीं भिक्षुः न स्पृशेद्दारवीमपि ।
स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ॥ -३७

किञ्च,

नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मन ।
बलाधिकैस्स हन्येत गजैरन्यैर्गजो यथा ॥ -३८

हरिणाच्छिक्षितमाह —

ग्राम्यगीतं न शृणुयात् यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ -३९

भगवद्गीतं शृणुयादेव । मृगयोर्लुब्धकस्य । "रसासक्तिः नाशहेतुरि"ति मीनाच्छिक्षितमाह –

जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिः मीनस्तु बडिशैर्यथा ॥ -४०

अतिक्षोभिततया दुर्जयया, ऋच्छति प्राप्नोति । बडिशैः आमिषैर्लिप्तैर्लौहकण्टकैः । दुर्जयत्वमुपपादयति –

तावज्जितेन्द्रियो न स्याद्विजितानिन्द्रियः पुमान् ।
न जयेद्रसनं यावत् जितं सर्वं जिते रसे ॥ -४१

पिङ्गलायास्सकाशान्नैराश्यं शिक्षितमाह –

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ -४२

कुररााच्छिक्षितमाह –

परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ।
अनन्तसुखमाप्नोति तद्विद्वान्यस्त्वकिञ्चनः ॥ -४३

यद्यत्प्रियतमं तस्य तस्य परिग्रहः, तद्विद्वान् परिग्रहो दुःखमिति विद्वान् । अकिञ्चनः त्यक्तपरिग्रहः । तदेवाह –

सामिषं कुररं जघ्नुः बलिनोऽन्ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ ४४

बालाच्छिक्षितमाह –

न मे मानापमानौ स्तः न चिन्ता गेहपुत्रिणाम ।
आत्मक्रीड आत्मरतः विचरामीह बालवत् ॥ -४५

नन्वज्ञसर्वज्ञयोः किं सादृश्येन ? नैश्चिन्त्यं परमं सुखमित्याह –

द्वावेव चिन्तया मुक्तौ परमानन्दमाप्लुतौ ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥ -४६

विमुग्धः अज्ञः, जडः अनुद्यमः । एवंभूतो यो बालश्च, प्रकृतेः परं प्राप्तः तौ द्वौ । कुमार्याशिक्षिमाह —

वासो बहूनां कलहः भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात् कुमार्या इव कङ्कणः ॥ -४७

वासः इति प्रथमान्तः । पाठे कलहः कलहहेतुः । वार्ता गोष्ठी भवेदित्यर्थः । चित्तैकाग्रताऽद्वैतस्फूर्तिलक्षणो समाधिहेतुरिति शरकाराच्छिक्षितमाह –

मन एकत्र संयुज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ह्रियमाणमतन्द्रितः ॥ -४८

तत्रोपायमाह जिनेति । आसनजये श्वासजयः । तस्य जये श्वासाधीनं मनः निश्चलं भवति । ततः न द्वैतस्फूर्तिरित्याह —

तदेवमात्मन्यवरुद्धचित्तः
न वेद किञ्चिद्बहिरान्तरं वा ।
यथेषुकारो नृपतिं व्रजन्त-
मिषौ गतात्मा न ददर्श पार्श्वे ॥ -४९

बहिर्दर्शनादिः, आन्तरं स्मृत्यादि, इषौ गतात्मा । तस्य ऋजूकरणे दत्तचित्तः । भेरीघोषैरन्तिके व्रजन्तं नृपतिमेव न वेद तद्वत् । सर्पाच्छिक्षितमाह –

एकचार्यनिकेतस्स्यात् अप्रमत्तो गुहाशयः ।
अलक्ष्यमाण आचारैः मुनिरेकोऽल्पभाषणः ॥ -५०

योगी संमर्दस्यापि त्यागे कुमारी गुरुः, जनसङ्गत्यागे सर्पः । एकचार्यसहायः । आचारैर्गतिभिः ।

गृहारम्भो हि दुःखाय विफलस्याध्रुवात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ ५१

अध्रुवात्मनः नश्वरशरीरस्य । स्वात्मनो देहाच्छिक्षितमाह –

देहो गुरुर्मम विरक्तिविवेकहेतुः
बिभ्रत्स सत्वनिधनं सततार्त्युदर्कम् ।

तत्त्वान्यनेन विमृशामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥ -५२

गुरुत्वे हेतुः विरक्तिविवेकयोर्हेतुः। विरक्तिहेतुत्वमाह – सत्वनिधनं उत्पत्तिविनाशौ, बिभ्रत् । किंच, सततं आर्त्युदर्कं दुःखमेवोत्तरोत्तरफलं बिभ्रत् । यद्वा सततार्तिरेव उदर्कं उत्तरफलं यस्य तत् । विवेकहेतुत्वमाह - तत्वानीति । यथा यथावत्, एवमुपकारित्वे देहे नैवास्था कर्तव्येत्याह तथापीति । पारक्यंश्वशृगालभक्ष्यमिति निश्चितवान् । श्रीभगवान् –

अवधूतवचः श्रुत्वा पूर्वेषां नस्सर्वपूर्वजः ।
सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ -५३

अथेदानीं ज्ञानिनां लक्षणमाह त्रिभिः —

यस्यात्मा हिंस्यते हिंस्रैः अन्यैः किञ्चिद्यदृच्छया ।
अर्चितो वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ -५४

हिंस्रैर्दुर्जनैः, अन्यैर्वा प्राणिभिः, यस्यात्मा देहः पीड्यते यदृच्छया येन केनापि क्वचित् किञ्चिदर्च्यते, स बुधः चेत्, तत्र न विक्रियेत तेन न विक्रियते इत्यर्थः। तदुक्तं याज्ञवल्क्येन —

"यः कण्टकैस्तु तुदति, चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च भेदो मुक्तस्य तस्य चे"ति ॥ -५५

न स्तुवीत न निन्देत कुर्वतस्साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितस्समदृङ्मुनिः ॥ -५६

किञ्च –

न कुर्यान्न वदेत्किञ्चित् न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्या विचरेज्जडवन्मुनिः ॥ -५७

दैहिकेऽपि कर्मणि उदासीनो यस्स मुक्तः, इतरो बद्ध इत्यर्थः । तत्र त्रिंशल्लक्षणेस्साधून्निरूपयति —

कृपालुरकृतद्रोहः तितिक्षुस्सर्वदेहिनाम ।
सत्यसारोऽनवद्यात्मा समस्सर्वोपकारकः ॥ -५८

कृपालुः परदुःखासहिष्णु, सर्वेषां देहिनामपि केषांचिदकृतद्रोहः तितिक्षुः क्षमावान्, सत्यं सारं स्थिरं बलं वा यस्य सः ।

कामैरहतधीर्दान्तः मृदुश्शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः । -५९

अनीहोऽदृष्टक्रियाशून्यः मितभुक् अल्पाहारः, शान्तः नियतान्तः-करणः, स्थिरः स्वधर्मे मच्छरणः मदाश्रयः, मुनिर्मननशीलः –

अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः ।
अमानी मानदः कल्यः मैत्रः कारुणिकः कविः ॥ -६०

अप्रमत्तस्सावधानः, गभीरात्मा निर्विकारः, धृतिमान्नित्यापद्यपि अकृपणः, जितषड्गुणः, "क्षुत्पिपासे, शोकमोहौ, जरामृत्यू

षडूर्मयः" एते षट् जिता येन सः। अमानी न मानाकाङ्क्षी, अन्येभ्योऽपि मानदः कल्यः परबोधदक्षः, मैत्रः अवञ्चकः, कारुणिकः करुणयैव प्रवर्त्यमानः, न दृष्टलाभेन, कविस्सम्यक् ज्ञानी।

आज्ञायैव गुणान्दोषान् मयादिष्टानपि स्वकान्।
धर्मान्सन्त्यज्य यस्सर्वान् मां भजेत्सोऽपि सत्तमः॥ -६१

धर्माचरणे सत्वशुद्धादीन्, विपक्षे दोषांश्चाविज्ञाय ज्ञात्वापि मद्ध्यानविक्षेपकतया तद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव सर्वान्मया वेदरूपेणादिष्टानपि स्वधर्मान्परित्यज्य यो मां भजेत्सोऽपि पूर्वोक्तवत्सत्तमः। यस्मादेवंभूतो मद्भजनप्रभाववतः –

तस्मात्त्वं उद्धवोत्सृज्य चोदनां प्रतिचोदनाम्।
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च॥ -६२
मामेकमेव शरणं आत्मानं सर्वदेहिनाम्।
याहि सर्वात्मभावेन मया स्या अकुतोभयः॥ -६३

चोदनां श्रुतिं, प्रतिचोदनां स्मृतिम्। यद्वा विधिं प्रतिषेधं च। प्रवृत्तं काम्यं कर्म, निवृत्तं नित्यनैमित्तिकमुत्सृज्य मां शरणं याहि। मयैवाकुतोभयः स्याः भवेः। अथ सनकादीन्प्रति हंसरूपी श्रीभगवान् –

ईक्षेत विभ्रममिदं मनसो विलासं
दृष्टं विनष्टमतिलोलमलातचक्रम्।

विज्ञानमेकमुरुधेव विभाति माया
स्वप्नः क्रियागुणविसर्गकृतो विकल्पः ॥ -६४

इदं जगत्, विभ्रममीक्षेत । तत्र हेतवः, मनसो विजृम्भितत्वात् दृष्टत्वात् विनाशित्वाच्च । स्वप्नवदिति चञ्चलत्वादलातचक्रवत् । ननु भ्रमोऽपि निर्विषयः कथं स्यादित्यत्राह विज्ञानमिति । तस्मात्क्रिया मायायाः गुणपरिणामकृतो विकल्पः । स स्वप्नः स्वप्नस्मृता समर्थ्यते ।

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णः
तूष्णीं भवेन्निजसुखानुभवो निरीहः ।
सन्दृश्यते क्वचिदिदं यदवस्तुबुद्ध्या
त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ॥ -६५

तस्माद्दृश्याद्दृष्टिं प्रतिनिवर्त्य, निजसुखानुभवः भवेत् तन्नैश्चल्यार्थं च, निवृत्ततृष्णः तूष्णीं निरीहश्च भवेत् । मनोवाक्कायव्यापाररहित इत्यर्थः । ननु देहवतस्सदा द्वैतदृष्टिप्रतिनिवर्तनायोगात् पुनस्संसारस्स्यादेव । तत्राह सन्दृश्यत इति । क्वचिदावश्यकाहारादिषु यद्यपीदं सन्दृश्यते, तथापि पूर्वमवस्तुबुद्ध्या यत्त्यक्तं तत्पुनर्मोहाय न भवेदेव । किन्तु देहपातपर्यन्तं स्मृतिरिव स्मृतिः संस्कारमात्रेणाभासो भवेदित्यर्थः ।

देहं च नश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।

दैवादपेतमथ दैववशादुपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥ -६६

आसनादुत्थितमुत्थाय, तत्रैव स्थितं, ततः क्वचिदपेतं निर्गतं, पुनस्तत्रैवोपेतं वा देहमपि न पश्यति, नानुसन्धत्ते । कुतोऽन्यत् यतः येन देहेन स्वरूपं, अध्यगमत् ज्ञातवान् तं देहं यतः कारणादिति वा । परिकृतं परिहितं वासः, गतं स्थिरं वा यथा न वेत्ति तद्वत् । ननु च यः परिपाल्यमानोऽपि मुमूर्षति तं चेन्न पश्यति तर्हि तथैव, नेत्याह —

देहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रतिसमीक्ष्यत एव सासुः ।
तत्त्वप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ -६७

दैववशेन गच्छन् स्वारम्भकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिसमीक्षत एव सासुः प्राणेन्द्रियसहितः । ननु तर्हि तस्मिन् कदाचित् आसज्जेत, नेत्याह स्वाप्नमिति । स्वाप्नं स्वप्नतुल्यं । अधिरूढः प्राप्तः, समाधिपर्यन्तो योगः येन सः । अत एव प्रतिबुद्धं ज्ञातं वस्तु परमार्थभूतं येन सः । तथा च श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति । किञ्च, अन्येषां तत्तल्लोकादिपरिच्छिन्नं सुखम् । भक्तस्य तु परिपूर्णमित्याह उद्धवं प्रति श्रीभगवान् —

मय्यर्पितात्मनस्सभ्य निरपेक्षस्य सर्वतः ।
मयात्मना सुखं यत्तत् कुतस्स्याद्विषयात्मनाम् ॥ -६८

हे सभ्य, मया परमानन्दरूपेण, आत्मना स्वरूपित्वेन स्फुरता ।

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।
मया सन्तुष्टमनसः सर्वास्सुखमया दिशः ॥ -६९

परिपूर्णतामेवाह —

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धिरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ -७०

न रसाधिपत्यं पातालादिस्वाम्यं, अपुनर्भवं मोक्षमपि, मद्विना मां हित्वाऽन्यन्नेच्छति। अहमेव तस्य प्रेष्ठ इत्यर्थः। ममापि स एव प्रेष्ठ इत्याह —

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् ।
अनुव्रजाम्यहं नित्यं पूययेदङ्घ्रिरेणुभिः ॥ -७१

किञ्च, मद्भक्तियुक्तानां सुखमेतावत् एवम्भूतमिति वा को वा वक्तुं समर्थः? यतस्स्वसंवेद्यं निरवद्यमित्याह —

अकिञ्चना मय्यनुरक्तचेतसः
शान्ता महान्तोऽखिलजीववत्सलाः ।

कामैरनालब्धधियो जुषन्ते
ते नैरपेक्ष्यं हि विदुस्सुखं मे ॥ -७२

महान्तः निरहंमानाः, अनालब्धधियः अस्पृष्टचित्ताः। निष्किञ्चनत्वादिना यथेष्टं हेतुहेतुमद्भावः। एवम्भूता मदीया यत्सुखं जुषन्ते तत्सुखं त एव विदुः नान्ये। कुतः? नैरपेक्ष्य, नास्त्यपेक्षा येषां ते, निरपेक्षाः, तैर्लभ्यं, न त्वन्यापेक्षैरित्यर्थः। न केवलमेवं, किन्तु मद्भक्तस्सकललोकं पुनातीत्याह —

वाग्गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचिच्च।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ॥ -७३

स्वभक्तौ साधनान्युपदिशन्नाह –

स्त्रीणां तत्सङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान्।
क्षेमे विविक्त आसीनः चिन्तयेन्मामतन्द्रितः ॥ -७४

आमवान् वीरस्सन्, क्षेमे निर्भये देशे, विविक्ते निर्जने। एतदुपपादयति -

न तथाऽस्य भवेत्क्लेशः बन्धश्चान्यप्रसङ्गतः।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ -७५

किञ्च,

वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च ।
आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥ -७६

अध्वने संसारमार्गाय ।

यो वै वाङ्मनसे सम्यगसंयच्छन्धिया यतिः ।
तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥ -७७

किञ्च,

एकश्चरेन्महीमेनां निस्सङ्गस्संयतेन्द्रियः ।
आत्मक्रिड आत्मरत आत्मवान् समदर्शनः ॥ -७८

विविक्तक्षेमशरणः मद्भावविमलाशयः ।
आत्मानं चिन्तयेदेकं अभेदेन मया मुनिः ॥ -७९

विविक्तं क्षेमं निर्भयं शरणं यस्य सः ।

अन्वीक्षेदात्मनो बन्धः मोक्षं च ज्ञाननिष्ठया ।
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ -८०

केन बन्धः ? केन वा मोक्षः ? इति । तदाह बन्ध इति ।

तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ।
विरक्तः क्षुल्लकामेभ्यः लब्ध्वात्मनि सुखं महत् ॥ -८१

पुरग्रामव्रजान्सार्थान् भिक्षार्थं प्रविशंश्चरेत् ।
पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ -८२

पुराणि अट्टादिमन्ति, तद्रहिता ग्रामाः, व्रजाः गोष्ठानि, तान्सार्थान् यात्रिकजनसमूहान् । ननु मृष्टान्नं विहाय कथं भिक्षान्ने प्रवृत्तिस्स्यादत आह –

नैतद्वस्तु तथा पश्येद्दृश्यमानं विनश्यति ।
असक्तचित्तो विरमेत् इहामुत्र चिकीर्षितात् ॥ -८३

एतद्दृश्यमानं मृष्टान्नादि वस्तुतया न पश्येत्, यतो विनश्यति । अत इहामुत्र च लोकेऽसक्तचित्तस्सन् चिकीर्षितात्तदर्थकृत्यात् विरमेत् । ननु तथापि यावद्विनाशं सुखहेतुत्वाच्चिन्तावतः कुतो विरामस्स्यात् ? तत्राह

यदेतदात्मनि जगत् मनोवाक्प्राणसंहतम् ।
सर्वं मायेति तर्केण स्वस्थं त्यक्त्वा न तत्स्मरेत् ॥ -८४

एतज्जगन्ममतास्पदं मनोवाक्प्राणैस्सहितं अहङ्कारास्पदं शरीरं सर्वं, तज्जन्यं सुखं चात्मनि मायामात्रमिति तर्केण संतुष्टान्तेन त्यक्त्वा स्वस्थ आत्मनिष्ठस्सन् पुनरेतन्न स्मरेत् न चिन्तयेत् ।

किञ्च,

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिकिङ्करः ॥ -८५

अविधिकिङ्करः विधिकिङ्करो न स्यादिति । कथं चरेत्तत्राह –

बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥ -८६

बुधो विवेकवानपि बालकवत् मानावमानविवेकशून्यः । विद्वान् पण्डितोऽपि उन्मत्तवत् लोकरञ्जनाभावेन । नैगमः वेदार्थनिष्ठोऽपि गोचर्यामनियताचारो भवेत् ।

वेदवादरतो न स्यात् न पाषण्डी नाहैतुकः ।
शुष्कवादविवादे च न किञ्चित्पक्षमाश्रयेत् ॥ -८७

कर्मकाण्डव्याख्याननिष्ठः अहैतुकः केवलकर्मनिष्ठः । शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् ।

नोद्विजेज्जनाद्धीरो जनं चोद्वेजयेन्न तु ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ -८८

अतिवादान्दुरुक्तानि ।

देहमुद्दिश्य पशुवत् वैरं कुर्यान्न केनचित् ।
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ -८९

यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ।

आत्मदृष्ट्या तावद्वैरं कारणं नास्तीत्युक्तमेकमेवेति । देहदृष्ट्यापि नास्तीत्याह —

भूतानि देहादिकारणरूपेणैकात्मकानि ॥ -९०

अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद्धृतिमान् उभयं दैवयन्त्रितम् ॥ -९१

दैवाधीनम् । यतोऽलं, तर्हि भिक्षाप्रयत्नेनापि । तत्राह —

आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते येन तद्विज्ञाय विमुच्यते ॥ -९२

आहारमात्रार्थं समीहेतैव । यतस्तस्य प्राणस्य धारणं युक्तम् । कथं तेन प्राणेन तत्त्वं विचार्यते? किं तेनापि? तदाह तद्विज्ञायेति । तर्हि किं मृष्टान्नादिकं अग्राह्यमेव? केनैवमुक्तं? इत्याह —

यदृच्छया चोपपन्नं अद्याच्छ्रेष्ठमुतापरम् ।
यथा वासस्तथा शय्यां प्राप्तं प्राप्तां भजेन्मुनिः ॥ -९३

शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः ॥ -९४

यथाहं ईश्वरः लीलया चरामि तथा ज्ञाननिष्ठस्सन् अनासक्तः कुर्यात् । विधिकिङ्करत्वे तस्य ज्ञाननिष्ठाविरोधादिति भावः । ननु तर्हि तत्फले स्वर्गादौ कदाचिदासक्तिर्भवेत्, नेत्याह —

कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येत् अदृष्टमपि दृष्टवत् ॥ -९५

आविरिञ्चाद्ब्रह्मलोकपर्यन्तं अदृष्टमपि सुखं अमङ्गलम् । दुःखरूपं नश्वरं च पश्येत् । एवं पश्यतः कथं तत्रासक्तिर्भवेदिति भावः । अत एव —

अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः ।
मुक्तसङ्गः परं बुद्ध्वा निरीह इह शाम्यति ॥ -१६

भयेन वेपथुः कम्पः यस्य सः । एवमप्रयतमानं प्रमत्तं निन्दति —

नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारकम् ।
मयानुकूलेन नभस्वतेरितं
पुमान्भवाब्धिं न तरेत्स आत्महा ॥ -१७

प्लवं नावं प्राप्येत्यध्याहारः । यो भवाब्धिं न तरेत् स आत्महा । तत्र हेतवः आद्यं सर्वफलानां मूलं, एतत्सुदुर्लभं जन्मकोटिभिरपि, प्राप्तुमशक्यम् । तथापि सुलभं यदृच्छया लब्धत्वात् । तं च सुकल्पं पटुतरम् । किञ्च, गुरुसंज्ञित-एव कर्णधारः नेता यस्य तम् । मया च स्मृतमात्रेणानुकूल-मारुतेन प्रेरितम् ।

तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ।
आत्माग्रहणनिष्पन्नं पश्यन्वै कल्पितं भ्रमम् ॥ -१८

दुःखप्रतिकारोद्यमं परित्यज्य परमेश्वरनिष्ठेनैव भवितव्यमित्याह –

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयतेऽपि वा ।
ताडितस्सन्निरुद्धो वा वृत्या वा परितापितः ॥ -९९

निष्ठितो मूत्रितो वाज्ञैः बहुधैवं प्रकम्पितः ।
श्रेयस्काम कृच्छ्रगतः आत्मनात्मानमुद्धरेत् ॥ -१००

क्षिप्त आक्षिप्तः निन्दित इति वा । प्रलब्धः उपहारितः, निष्ठितः निष्ठीवनविषयीकृतः, मूत्रितः मूत्रेणार्द्रीकृतः, प्रकम्पितः परमेश्वरनिष्ठतः प्रच्यावितः, कृच्छ्रगतः कष्टं प्राप्तोऽपि । भिक्षुः देहाभिमानिनं निन्दतीत्याह –

देहं मनोमात्रमिमं गृहीत्वा
ममाहमित्यन्धधियो मनुष्याः ।
एषोऽयमन्योन्यमिति भ्रमेण
दुरन्तपारे तमसि भ्रमन्ति ॥ १०१

मनोमात्रपरिकल्पितमिमं स्वदेहं, अहमिति, पुत्रादिदेहं ममेति, स्वीकृत्य, तमसि संसारे ।

तस्माद्देहमिमं लब्ध्वा
ज्ञानविज्ञानसम्भवम् ।
गुणसङ्गं विनिर्धूय
मां भजेत विचक्षणः ॥ -१०२

विपक्षे दोषमाह —

सङ्गं न कुर्यादसतां शिश्नोदरतृषां क्वचित् ।
तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ॥ -१०३

असतां लक्षणमाह शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपः, तेषांम् । क्वचित् कदाचिदपि, आस्तां तावद्बहूनां सङ्गः । किन्तु तस्यैकस्य अनुगः, अनुवर्ती अन्धमनुगच्छति योऽन्धः तद्वदिति । एवंभूतस्य सर्वं साधनं व्यर्थमित्याह ऐलः —

किं विद्यया किं तपसा किं त्यागेन किं श्रुतेन ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ -१०४

त्यागेन सन्यासेन, विविक्तेनैकान्तसेवया, मौनेन वाङ्नियमेन स्त्रीषु कुत्सितान्दर्शयन्नाक्रोशति —

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥ -१०५

त्वगादीनां संहतौ सङ्घाते देहे ।

अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ -१०६

तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविस्रब्धः षड्वर्गः, किमु मादृशाम् ॥ -१०७

अविस्रब्धः अविश्वसनीयः। फलितमाह श्रीभगवान् —

एवं प्रगायन्नृपदेवदेवः
स ऊर्वशीलोकमथो विहाय ।
आत्मानमात्मन्युपगम्य मां वा
उपारमत् ज्ञानविधूतमोहः ॥ -१०८

नृपेषु देवेषु च दीव्यतीति तथा ।

ततो दुस्सङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ -१०९

उक्तिभिर्हितोपदेशैः। देवादिसङ्गादपि सत्सङ्गः श्रेयानिति दर्शयन्सतां लक्षणमाह –

सन्तोऽनपेक्षा मच्चित्ताः प्रशान्तास्समदर्शिनः ।
निर्मला निरहङ्काराः निर्द्वन्द्वा निष्परिग्रहाः ॥ ११०

न च तेषूपदेशापेक्षा, अपि तु केवलं तत्सन्निधिरेव तारयतीत्याह —

तेषु नित्यं महाभाग महाभागेषु मत्कथाम् ।
सम्भवन्ति तान्नृणां जुषतां प्रधुनन्त्यघम् ॥ -१११

ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ।
मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ -११२

भक्तिं लब्धवतस्सोऽर्थो किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ -११३

यथोपाश्रयमाणस्य भगवन्तं विभावसुम् ।
जाड्यं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ -११४

विभावसुं अग्निं, सेवमानस्य नश्यति, तथा कर्मादिजाड्यं, आगामिसंवत्सरभयं च, तन्मूलमज्ञानं नश्यतीत्यर्थः ।

निमज्जोन्मज्जतां घोरे भवाब्धौ हि परायणम् ।
सन्तो ब्रह्मविदश्शान्ताः नौर्दृढेवाऽप्सु मज्जताम् ॥ -११५

परायणं पराश्रयः । इदानीमतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह –

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण वा ॥ -११६

परेषां स्वभावान् शान्तघोरादीन्, कर्माणि च । तत्र हेतुर्विश्वमिति । विपक्षे दोषमाह –

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थादसत्याभिनिवेशतः ॥ -११७

स्वार्थात् ज्ञाननिष्ठलक्षणात् । असत्ये मिथ्याभूते द्वैतेऽभिनिवेशात् । द्वैतासत्यतया स्तुतिनिन्दयोर्निर्विषयत्वं प्रपञ्चयति –

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ -११८

अवस्तुनो द्वैतस्य मध्येऽवस्तुत्वमेवाह वाचेति । बाह्येन्द्रियोपलक्षणं, वाचोदितं उक्तं, चक्षुषा दृष्टं, श्रोत्रेण श्रुतमित्यादि। ननु कथं निर्मूलं प्रतीयेत ? तत्राह –

इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ।
एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ -११९

न निन्दति न च स्तौति लोके चरति सूर्यवत् ।

आत्मनिष्ठज्ञानयोर्नैपुणनिष्ठाम् । सूर्यवत्समो भूत्वा । तन्निष्ठप्राप्त्युपायमाह –

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।
आद्यन्तवदसञ्ज्ञात्वा निस्सङ्गो विचरेन्महीम् ॥ -१२०

यदाद्यन्तवद्द्वैतं सदसदिति ज्ञात्वा निस्सङ्गो विचरेत् । आद्यन्तवत्वे प्रमाणानि, प्रत्यक्षेण घटादि, अनुमानेन सावयवत्वेन दृश्यं पृथिव्यादि, निगमेनाप्रत्यक्षमाकाशादि, आत्मसंवेदा स्वानुभवेन सर्वं दृश्यमाद्यन्तवच्चेति ज्ञात्वा । ज्ञानेनाज्ञाननिवृत्तौ मुक्तिरित्याह –

आमूलमेतद्बहुरूपरूपितं
मनोवचःप्राणशरीरकर्म ।

ज्ञानासिनोपासनया शितेन
छित्वा मुनिर्गां विचरत्यतृष्णः ॥ १२१

वस्तुतो मूलशून्यमज्ञानं, एतत्तु बहुभिः रूपैः रूपितं प्रकाशितम् । ऐन्द्रजालकतुल्यमिति वा । किं ? तदाह मन इति । मनआदीनां द्वन्द्वैक्यं क्रियत इति कर्म अहङ्कारं, गुरूपासनया शितेन ज्ञानखड्गेन छित्वा । ननु प्रपञ्चस्य सत्यत्वेन कथमसत्यत्वमित्याशङ्क्य, ब्रह्मैव सत्यं तदन्यदसदिति वक्तुमिदमाह –

यत्पुरस्तादुत यन्न पश्चात्
मध्ये च यन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्यत्
तदेव तत्स्यादिति मे मनीषा ॥ १२२

मध्ये च तत्पृथक् भाति । किन्तु व्यपदेशमात्रम् । कुतः ? यद्यत् परेणान्येन भूतं जातं प्रसिद्धं प्रकाशितं च, तत्तदेव कारणप्रकाशकतावन्मात्रं स्यात्, पृथगिति मनीषा बुद्धिः । "वाचारम्भणं विकारो नामधेयं, मृत्तिकेत्येव सत्यम्" । "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतेः । उपसंहरति –

एवं स्फुटं ब्रह्म विवेकहेतुभिः
परापवादेन च विशारदेन ।

चिछत्वात्मसन्देहमुपारमेत

स्वानन्दतुष्टोऽखिलकारकेभ्यः ॥ -१२३

एवं निगमादिभिस्स्फुटं यथा भवति तथा ब्रह्म विवेकहेतुभिः तथा, परस्य देहादेः अपवादेनात्मत्वनिरासेन च । कीदृशेन? विशारदेन निपुणेन गुरुणा निमित्तभूतेनेति वा । आत्मविषयं सन्देहं चिछत्वा स्वानन्दतुष्टस्सन्, अखिलकारकेभ्यः इन्द्रियादिभ्यः उपारमेत निस्सङ्गो भूयात् । ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनस्संसारस्स्यादिति । अत आह –

करोति कर्म क्रियते च जन्तुः

केनापि सन् चोदित आनिपातात् ।

न तत्र विद्वान् प्रकृतौ स्थितोऽपि

निवृत्ततृष्णस्स्वसुखानुभूत्या ॥ -१२४

केनापि संस्कारादिना, विद्वांस्तु प्रकृतौ देहे स्थितोऽपि । तत्र कर्मणि, न विक्रियते निरहङ्कारत्वात् । हर्षविषादादिभिः संसारं न प्राप्नोति । किञ्चास्तां तावन्न दैहिककर्मभिः विकारशङ्केति, यतः देहमप्यसौ न पश्यतीत्याह —

तिष्ठन्तमासीनमुत व्रजन्तं

शयानमुक्षन्तमदन्तमन्नम् ।

स्वभावमन्यत्किमपीह मानं

आत्मानमात्मस्थमतिर्न वेद ॥ -१२५

तत्राह —

यदि स्म पश्यदसदिन्द्रियार्थं
नानानुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी
स्वाप्नं यथोत्थाय तिरोदधानम् ॥ -१२६

यद्यप्यसन्तां बहिर्मुखानामिन्द्रियाणां अर्थं पश्यति, तत्रापि "नानात्वं मिथ्या स्वप्नवदि"त्यनुमानेन विरुद्धं बाधितम् सदन्यदात्मव्यतिरेक्तं, मनीषी विद्वान् वस्तुतया न मन्येत । स्वप्नादुत्थाय, प्रबुद्धः संस्कारमात्रेण स्वाप्नं विषयं स्फुरन्तं यथा तद्वत् । अत एव स्वयं तिरोभाववन्तं यथा तद्वत् । अथ आत्मनो निर्विकारतां प्रपञ्चयति —

एष स्वयंज्योतिरजप्रमेयो
महाविभूतिस्सकलानुभूतिः ।
एकोऽद्वितीयो वचसां विरामे
येनेषिता वागसवश्चरन्ति ॥ -१२७

ननु कथं श्रुतिविषयस्य स्वयंज्योतिष्ट्वादि ? तत्राह वचसां विरामेऽगोचरत्वेन निवृत्तौ सत्यां, तथा च श्रुतिः "यतो वाचो निवर्तन्ते" इत्यादि । तत्र हेतुः येनेषिता प्रेरिता वाक् प्राणाश्चरन्ति स्वविषये प्रवर्तन्ते । तथा च श्रुतिः 'केनेषितः पतति, प्रेषितं मनः" इत्यादि । ततः किमत आह —

मामेव सर्वभूतेषु बहिरन्तरपावृतम् ।
ईक्षेतात्मनि चात्मानं यथा खममलाशयाः ॥ -१२८

सर्वभूतेष्वात्मनि चात्मानं स्थितं निर्विकारत्वादिलक्षणं मामेवेक्षेत। कथमेकस्य सर्वभूतेषु स्थितिस्तत्राह बहिरन्तः पूर्णमित्यर्थः। तत्कुतः? अपावृतं अनावरणम्। तदपि कुतः? यथा खमसङ्गत्वादित्यर्थः।

सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
परिपश्यन्नुपरमेत् सर्वतो मुक्तबन्धनः ॥ -१२९

आत्ममनीषया सर्वत्र परमात्मदृष्ट्या या विद्या तया। अतः परितो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत। अयमेव समीचीनः उपाय इत्याह –

अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।
सद्भावस्सर्वभूतेषु मनोवाक्कायकर्मभिः ॥ -१३०

महाप्रकरणार्थमुपसंहरति —

एष देहवतः कृत्स्नः ब्रह्मवादस्य सङ्ग्रहः ।
समासव्यासविधिना देवानामपि दुर्गमः ॥ -१३१

अभीक्ष्णस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।
एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ -१३२

उक्तार्थं द्रढयितुं पृच्छति —

अप्युद्धव त्वया ब्रह्म सखे समुपधारितम् ।
अपि ते विगतो मोहः शोकस्त्रासो मनोभवः ॥ -१३३

अपि, किं, मनोभवः कामः । श्रीशुकः —

इत्थं हरेर्भगवतो रुचिरावतार-
वीर्याणि बालचरितानि च शन्तमानि ।
अन्यत्र चेह च शुभानि गृणन्मनुष्यः
भक्तिं परां परमहंसगतौ लभेत ॥ -१३४

शन्तमानि परमङ्गलानि, परमहंसानां गतौ श्रीकृष्णे ।

॥ इत्येकादशस्कन्धसारसङ्ग्रहः ॥

## ॥ अथ द्वादशस्कन्धसारसङ्ग्रहः ॥



इदानीमपि भगवन्नामवैभवमेव दर्शयन् कलिधर्ममाह श्रीशुकः —

यन्नामधेयं म्रियमाण आतुरः
पठन्स्खलन् वा विवशो गृणन्पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति, यक्ष्यन्ति न तं कलौ जनाः ॥ -१

यस्य श्रीहरेर्नामधेयं पठन् उत्तमां गतिं प्राप्नोति । तं श्रीहरिं कलौ पाषण्डजनाः न यक्ष्यन्ति न पूजयन्तीत्यन्वयः ।
अथ कलिदोषनिवृत्त्युपायमाह —

पुंसां कलिकृतान्दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ -२

द्रव्यदेशात्मभिस्सम्भवो येषां तान् । चित्तस्थः चित्ते स्फुरितस्सन् भगवान् सर्वान्निश्शेषतया हरति । ननु विद्यातपादिभिरेव दोषनिवृत्तिसम्भवात् किं भगवतेत्याशङ्क्याह —

विद्यातपःप्राणनिरोधमैत्री-
तीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते ॥ -३

विद्या नानादेवतोपासना । प्राणनिरोधः प्राणायामः । इदानीं कलिं स्तौति —

कलेर्दोषनिधे राजन् अस्ति ह्येको महान्गुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥ -४

दोषनिधेः समस्तदोषसमुद्रस्य कलेरेको महान्गुणः । अन्यत्र क्वापि नास्ति । श्रीकृष्णस्य सङ्कीर्तनात् सर्वानर्थसंसारबन्धमुक्तः परं श्रीकृष्णं व्रजेत् ।

॥ इति द्वादशस्कन्धसारसङ्ग्रहः ॥

भागवतसमधिगम्यां चर्यामार्यैकसेवितामेताम् ।
अनुतिष्ठन्तु यतीन्द्राः कैवल्यानन्दकाङ्क्षिणस्सर्वे ॥

प्रवितनजनमोहप्रशमितपड्वाक्प्रबोधितात्मानम् ।
वरकरुणाभरजलधिं परमशिवेन्द्रं दयानिधिं वन्दे ॥

॥ इति श्रीमद्भागवतशास्त्रसारसङ्ग्रहस्समाप्तः ॥

## ॥ अथ विष्णुपुराणसारसङ्ग्रहः ॥

---

श्रीगुरोश्चरणद्वन्द्वमद्वन्द्वानन्दसाधनम् ।
तद्वन्दे यद्रजस्स्पर्शान्मुक्तास्स्युश्शिष्यकोटयः ॥ -१

श्रीमद्विष्णुपुराणे च भक्तिज्ञानादिलक्षणाम् ।
लिखामि परहंसानां चर्यामार्यजनेडिताम् ॥ -२

अथैतत्पुराणप्रतिपाद्यं विष्णुस्वरूपं पररूपेण प्रणमन्नाह मैत्रेयं प्रति पराशरः -

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ -३

एकरूपमेव रूपं यस्य तस्मै । तत्र हेतुः सर्वजिष्णवे अत्यैश्वर्येण सर्वान् जेतुं शीलं यस्य तस्मै । इदमेव स्वरूपं प्रपञ्चयति चतुर्भिः -

परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषेण विवर्जितः ॥ -४

"इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः" । इत्यादि श्रुतिभिः परत्वे प्रतिपादितानामिन्द्रियादीनां परः श्रेष्ठतमः, अत एव परमः उत्कृष्टः परमात्मा, आत्मसंस्थितः अनन्याधारः । रूपवर्णादिनिर्देशः तदेव विशेषणं, तेन विवर्जितः । रूपं शुक्लादि, वर्णो ब्राह्मणत्वादिः, आदिशब्दाज्जातिक्रिये । शुक्लो ब्राह्मणः गौः पाचकः इति निर्देशेन विशेषयितुमशक्यः । षड्भावविकारवर्जित इत्याह —

अपक्षयविकाराभ्यां परिणामर्धिजन्मभिः ।
वर्जितश्शक्यते वक्तुं यस्सदास्तीति केवलः ॥ -५

"अस्तीत्येवोपलब्धव्य" इत्यादिश्रुतेरस्तित्वं तदङ्गीकर्तव्यम् । तथा च द्वितीयो भावविकारः प्राप्त इत्याशङ्क्याह शक्यते वक्तुं यस्सदास्तीति । सर्वदास्तित्वं च न भावविकारः । किन्तु जन्मान्तरास्तित्वमेव कादाचित्कत्वादतो नायं दोष इत्यर्थः । परमात्मैव तन्त्रवद्भिर्वासुदेवः इत्युच्यते इत्याह —

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
अतस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ -६

सर्वत्रासौ वसतीति समस्तं चास्मिन्वसतीति । वै प्रसिद्धम् । यतस्तस्य वासुदेव इति विद्वद्भिरुच्यत इत्यर्थः । स एवोपनिषदैः ब्रह्मेत्युच्यत इत्याह –

तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ -७

हेयमविद्या, तत्कार्यं च, तदभावान्निर्मलम् । प्रधानादीनामत्र उपादानत्वं वारयन्नाह —

प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयश्शुद्धं तद्विष्णोः परमं पदम् ॥ -८

यत्पश्यन्ति तदेव विष्णोः परमं रूपमित्यर्थः । ब्रह्माद्यवतारमूल स्वरूपेण । ब्रह्मादिरूपाणि तद्व्यतिरिक्तानि न भवन्तीत्याह –

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥ -९

सृष्ट्यादिकरणं निमित्तं यस्यास्तां संज्ञां यातीत्यर्थः । सनन्दादयः -

परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ -१०

जगत्पते, एष महिमा मायाप्रभावः, कोऽसौ ? येन महिम्ना व्याप्तमेतच्चराचरम् ।

यदेतद्दृश्यते मूर्तमेतद्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ -११

यदेतन्मूर्तं भूतात्मकमिव रूपं दृश्यते, एतद्ज्ञानात्मनः ज्ञानघनस्य तव ज्ञानमयमेव रूपं ज्ञानात्मकं अयोगिनस्त्वज्ञाः भ्रान्तिज्ञानेन जगद्रूपं भूतमयं पश्यन्तीत्यर्थः ।

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तः भ्राम्यन्ते मोहसंप्लवे ॥ -१२

मोहसंप्लवे संसारे । ज्ञानात्मकमेव सर्वमित्यत्र विद्वदनुभवं प्रमाणयति –

ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ -१३

एकान्तिनस्सदा ब्रह्मध्यायिनो नियतेन्द्रियाः ।
तेषां तत्परमं स्थानं यत्प्रपश्यन्ति सूरयः ॥ -१४

विशुद्धबोधवन्नित्यमजमक्षयमव्ययम् ।
अव्यक्तमविकारं च विष्णोर्यत्परमं पदम् ॥ -१५

ध्रुवः –

शुद्धसूक्ष्मोऽखिलव्यापी प्रधानात्परमः पुमान् ।
यस्य रूपं नमस्तस्मै पुरुषायाविनाशिने ॥ -१६

तं ब्रह्मभूतमात्मानं अशेषजगतः पतिम् ।
प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर ॥ -१७

ब्रह्मत्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् ।
तस्मै नमस्ते सर्वात्मन् योग्यचिन्त्याविकारवत् ॥ -१८

ब्रह्मत्वात् सर्वगत्वात् सर्ववर्धकत्वाच्च । विकारं न भवतीत्यविकारवत् । प्रचेतसः —

शुद्धस्संलक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः ।
तमात्मरूपिणं देवं नतास्स्मः पुरुषोत्तमम् ॥ -१९

अविकारमजं शुद्धं निर्गुणं यन्निरञ्जनम् ।
नतास्स्मः तत्परं ब्रह्म विष्णोर्यत्परमं पदम् ॥ -२०

कण्डुः —

ब्रह्म प्रभुर्ब्रह्म स सर्वभूतः
ब्रह्म प्रजानां पतिरच्युतोऽसौ ।
ब्रह्माव्ययं नित्यमजं स विष्णुः
अपक्षयाद्यैरखिलैरसङ्गी ॥ -२१

उक्तं तं त्वनुस्मरन् दोषोपशमं प्रार्थयते –

ब्रह्माक्षरमजं नित्यं यदादौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥ -२२

यदा निर्विकारं ब्रह्मैवासौ पुरुषोत्तमः, तदा तदनुसरणेन तत्प्रसादात्तत्स्वरूपाविर्भावाच्च, मम रागादयस्सर्वे दोषाः प्रकर्षेण समूलं नाशं यान्तु । प्रह्लादः -

अनादिमध्यान्तमजं अवृद्धिक्षयमच्युतम् ।
प्रणतोऽस्म्यन्तसन्तानं सर्वकारणकारणम् ॥ -२३

अन्तसन्तानं, अन्तं यान्तीत्यन्ताः, संहर्ता सन्तन्यते अनेनेति । सन्तानस्थितिहर्ता, तम् ।

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ।
यस्मिन्स्मृते जन्मजरान्तकादि-
भयानि सर्वाण्यपयान्ति तात ॥ -२४

यस्मिन्स्मृत एव जन्मादीन्यपि भयान्यपयान्ति, तस्मिन्मनसि नित्यं स्थिते सति भयं कुत्र तिष्ठति ? न कुत्रापीत्यर्थः । अतो बन्धमुक्तये विष्णुभक्तिरेव कर्तव्येति वक्तुं प्रवृत्तिमार्गे सर्वावस्थासु नित्यं दुःखमेव दर्शयन्नाह दैत्यपुत्रान्प्रति प्रह्लादः -

क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व कान्तिशोभासौरभ्यकमनीयादयो गुणाः ॥ -२५

महाचयस्स्थूलसङ्घातः । कान्तिर्गौरत्वादिरङ्गः, छायादिशोभा भूषणत्वादिकृता, सौरभ्यं, सौगन्ध्यं, कमनीयं सौन्दर्यं, एवमादयो गुणाश्च क्व ।

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढः भविता नरकेऽपि सः ॥ -२६

यदि देहे ममकारास्पदेऽतिप्रीतिमान् तस्मिन्नरकेऽपि प्रीतिमान् भविष्यति । तस्यापि नरके भोग्ये मांससङ्घातत्वाविशेषात् । किञ्च धनाच्च गजभृत्यादिपरिग्रहोऽपि दुःखहेतुरेव, तत्परिपालनादिबहुक्लेशावहत्वादित्याह –

करोति हे दैत्यपुत्राः यावन्मात्रं परिग्रहम् ।
तावन्मात्रं स एवास्य दुःखं चेतसि यच्छति ॥ -२७

धनकलत्रपुत्रादिसम्बन्धो दुःखहेतुरेवेत्याह —

यावतः कुरुते जन्तुस्सम्बन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ -२८

शोकरूपाश्शङ्कवः कीलकाः, निखन्यन्ते निपात्यन्ते । तेषामपगते तन्नाशादिशोकानपगमादित्यर्थः । तदेवं, प्रवृत्तिमार्गदोषोक्त्या विरक्तिमुक्त्वा, इदानीं विष्णुसेवां प्रवर्तयन्नाह –

तदेवमतिदुःखानामास्पदे तु भवार्णवे ।
भवतां कथ्यते सत्यं विष्णुरेकं परायणम् ॥ -२९

तथाप्यस्माकं बालानां तत्रानधिकार इति शङ्कां व्यावर्तयति –

मा जानीत वयं बालाः देही देहेषु शाश्वतः ।
जरायौवनजन्माद्याः धर्मा देहस्य, नात्मनः ॥ -३०

तत्परिणामभेदेन भिन्नेष्वपि बाल्ययुवादिदेहेषु । देहिनः प्रतिसन्धानाद्देही शाश्वतो नित्यः । अतो जराद्या धर्मा देहस्यैव नत्वात्मनः । देहात्मविवेकशून्यानामविरक्तानामेवात्रानधिकारः । तद्विवेकिनां तु विरक्तानां तत्क्षमनन्तरमेवाधिकारः । देहाद्यवस्था तु न कारणम् । "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति भावः । अतः श्रेयसि विलम्बो न कर्तव्य इत्याह —

तस्माद्बाल्ये विवेकात्मा यतेत श्रेयसे युवा ।
बाल्ययौवनवृद्धाद्यैर्देहधर्मैरसंयुतः ॥ -३१

विवेकात्मा विवेकचित्तः, तमेव विवेकं स्मारयति बाल्येति । अतो युष्माकमपि विष्णुभक्तावेव प्रवृत्तिर्युक्ता, सुकरत्वान्महाफलत्वाच्चेत्याह —

आयासस्स्मरणे कोऽस्य, स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ -३२

विष्णुभक्तौ च सर्वत्र विष्णुदृष्टिस्सर्वमैत्री च कारणमित्याह –

सर्वभूतस्थिते तस्मिन्मतिमैत्री दिवानिशम् ।
भवतां जायतामेवं सर्वक्लेशान्प्रहास्यथ ॥ -३३

सर्वभूतेष्वन्तर्यामितया मतिर्भवतामस्तु । अत एव, तदधिष्ठाने भूतमात्रे मैत्री चाहर्निशमस्तु । एवमनेन प्रकारेण रागद्वेषादिकृतान्सर्वान्क्लेशान्प्रहास्यथेत्यर्थः । ननु सर्वभूतेषु मैत्री दुष्करा ।

मदमात्सर्यादिभिस्सन्तप्यमानेषु, धनविद्यागर्वितेषु वृथैव बद्धवैरेषु च द्वेषस्य दुष्परिहरत्वादित्याशङ्क्याह त्रिभिः —

तापत्रयेणाभिहितं यदेतदखिलं जगत् ।
तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥ -३४

तापत्रयेणाध्यात्मिकादिदुःखत्रयेण, मदमात्सर्यादिना जगदेतदभिहितम् । यदा बुद्धिस्तदा शोच्येषु कृपाविषयेषु तेषु भूतेषु कः प्राज्ञः द्वेषं करोति तथैवंविधमतिः ।

अथ भद्राणि भूतानि हीनशक्तिरहं परम् ।
मुदं तथापि कुर्वीत हानिर्द्वेषफलं यतः ॥ -३५

भद्राणि धनविद्यादिसम्पदा हृष्टानि । अहमेव केवलं धनाद्यार्जने हीनशक्तिरपि । तथापि मुदं प्रीतिमेव कुर्वीत, न तु द्वेषम् । यतो द्वेषस्य फलं हानिरेव । तथाहि न्यायविदः – "इष्टसाधनज्ञानस्य रागत इवादानं फलम् । अनिष्टसाधनस्य द्वेषतः हानिः फलमि" ति वर्णयन्ति । अतो हानिफलो द्वेषो न कर्तव्य इत्यर्थः ।

बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यतीव मोहेन व्याप्तानीति मनीषिणा ॥ -३६

यदि चेद्वृथैव बद्धवैराणि, तस्मिन्द्वेषं कुर्वन्ति, तदा मनीषिणा तान्यतीव मोहेन व्याप्तानीति शोच्यानि अनुकम्प्यानि । तेषु

सर्वदा द्वेषो न युक्त इत्यर्थः । एते च द्वेषोपशमप्रकाराः मध्यमाधिकारिणामेवोक्ताः । न तूत्तमाधिकारिणामित्याह —

एते भिन्नदृशां दैत्या विकल्पाः कथिता मया ।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥ -३७

भिन्नदृशां भेददृष्टीनां, तत्र भेददृष्ट्यावङ्गीकारं कृत्वा, एते विकल्पाः द्वेषोपशमनप्रकाराः कथिताः । उत्तमानां तु परमार्थ-संक्षेपो मत्तः श्रूयताम् । तमेवाह —

विस्तारस्सर्वभूतस्य विष्णोस्सर्वमिदं जगत् ।
सद्रष्टव्यमात्मवत्तस्मात् अभेदेन विचक्षणैः ॥ -३८

समुत्सृज्यासुरं भावं तस्माद्यूयं यथा वयम् ।
तथा प्रयत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥ -३९

आसुरं भावं सम्यगुत्सृज्य, यूयं वयं च यथा निर्वृतिं यथा येन प्रकारेण प्राप्स्यामः, तथा यत्नं करिष्यामः ।

असारसंसारविवर्तनेषु
मा यात तोषं प्रसभं ब्रवीमि ।
सर्वत्र दैत्यास्समतामुपेत
समत्वमाराधनमच्युतस्य ॥ -४०

असारोऽयं संसारः । तत्र विवर्तनानि देवमनुष्यतिर्यगादि-जन्मानि । तेषु तत्तदुचितैर्भोगैः तोषं मा यात । किन्तु

सर्वभूतेषु समतां समदर्शितामुपेत । तदेवाच्युतस्याराधनम् । ततः किमत आह —

तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं
धर्मार्थकामैरलमल्पकैस्तैः ।
समाश्रिताद्ब्रह्मतरोरनन्तात्
निस्संशयं मुक्तिफलप्रपातः ॥ -४१

तस्मिन् प्रीते प्रसन्ने सति न किञ्चिद्दुर्लभम् । तथापि त्रिवर्गो न प्रार्थ्यः मोक्षोऽपि न प्रार्थ्यः तुच्छत्वात् । यथा चूतमूलाश्रितस्य पुरतः स्वयमेव तत्फलं पतति । तथैव ब्रह्मलक्षणादनन्तात् सम्यगाश्रितान्मुक्तिफलप्रपातस्यावश्यंभावित्वादित्यर्थः । उक्तमेवार्थं सर्वत्र सङ्गमयन्नाह पितरं प्रति –

एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥ -४२

एवं सर्वभूतमयं हरिं ज्ञात्वा, सर्वेषु भूतेषु तद्भक्तिः कर्तव्या ।

सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥ -४३

तदेवाह —

त्वय्यस्ति भगवान्विष्णुः मयि चान्यत्र चास्ति सः ।
यतस्ततोऽयं मित्रं मे शत्रुश्चेति पृथक् कुतः ॥ -४४

पृथक् भेदः ।

एवं ज्ञाते स भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः ॥ -४५

तदेवं विष्णोर्ब्रह्मतया सर्वात्मकत्वात् सर्वस्यापि ब्रह्मत्वाविर्भावेन तद्भेदं पश्यन्नाह द्वाभ्याम् –

सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ॥ -४६

अहमेवाऽक्षयो नित्यः परमात्माऽऽत्मसंश्रयः ।
ब्रह्मसंज्ञोऽहमेवाग्रे तथा चान्ते परः पुमान् ॥ -४७

अग्रे सृष्टेः पूर्वम् । अन्ते च प्रलयानन्तरम् । उपदेशसर्वस्वं तत्फलं चाह श्रीपराशरः –

अहं हरिस्सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयः
भवोद्भवा द्वन्द्वगदा भवन्ति ॥ -४८

भवो देहः तस्मादुद्भवन्तीति उद्भवाः, द्वन्द्वरागद्वेषादयो हृद्रोगा न भवन्ति । स्पष्टमन्यत् –

॥ इत्येते प्रथमांशश्लोकाः ॥

## ॥ अथ द्वितीयांशश्लोकाः ॥

****

पूर्वं परमात्मनस्सर्वातीतत्वमुक्तम् । इदानीं सर्वात्मकत्वमाह श्रीपराशरः –

विश्वरूपेण सर्वत्र सर्वस्सर्वेश्वरो हरिः ।
सर्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः ॥ -१

एवं चेत्कुतो बन्धमोक्षौ ? तत्राह —

ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ।
ज्ञानात्मकमिदं सर्वं न ज्ञानाद्विद्यते परम् ॥ -२

**ज्ञानात्मकं परं ब्रह्म, तदेव ज्ञानात्मकं ब्रह्माविद्ययाऽहङ्कारादिरूपेण प्रतीतं बन्धाय इष्यते । चशब्दात्तदेव विद्यया तन्निरासेन मोक्षाय प्रतिपद्यत इत्यर्थः । न चाध्यसनीयं निरसनीयं, वस्तुतस्तद्व्यतिरिक्तमस्तीत्याह ज्ञानात्मकमिति । तदेवाह —**

ज्ञानस्वरूपो भगवान्यतोऽसौ
अशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥ -३

ज्ञानमेव स्वरूपं तत्त्वं यस्य, स एवासौ, भगवान् । यत-अतोऽसौ अशेषमूर्तिः प्रपञ्चमूर्तिस्तु वस्तुभूतः परमात्मभूतो न भवति । कथं तर्हि प्रपञ्चस्य तन्मूर्तित्वं ? तत्राह ततोहीति । तस्मात् ज्ञानस्वरूपाज्जातान् शैलादिभेदान् विज्ञानेऽधिष्ठाने विजृम्भितानि मायया विलसितानि रूपाणि जानीहि ।

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित्कदाचिन्निजवस्तु जातम् ।
विज्ञानमेकं निजकर्म वेद
विभिन्नचित्तैः बहुधाप्युपेतम् ॥ -४

निजानां कर्मणां भेदेन विभिन्नं चित्तं येषां तैः । विज्ञानमेव नानावस्तुरूपेण कृतम् । वृत्तिज्ञानं व्यावर्तयन्नाह —

ज्ञानं विशुद्धं विमलं विशोकं
अशेषलाभादिनिरस्तसङ्गम् ।
एकं सदैकः परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥ -५

विशुद्ध विषयोपरागशून्यं, विमलं रागादिशून्यं, अशेषाणां चित्ताद्युपाधीनां लोभादिभिर्धर्मैः निरस्तस्सङ्गो यस्य । तथाभूतं ज्ञानं सदैकमेव । स एव चैकः, परमस्सर्वोत्तमः परमेश्वरो वासुदेवः । यतो व्यतिरिक्तं किञ्चिदपि नास्ति । राजानं प्रति जडभरतः –

आत्मा शुद्धोऽक्षरश्शान्तः निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ न स्तः एकस्याखिलजन्तुषु ॥ -६

शुद्धो देहादिव्यतिरिक्तः, अतोऽस्याखिलजन्तुषु एकस्य परिपूर्णस्य प्रवृद्ध्यपचयौ न स्तः ।

यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्सोऽहमित्येतद्विफलं वचः ॥ -७

यदा तु सर्वदेहेष्वेक एवात्मा साक्षितया व्यवस्थितः, तदा को भवानिति बहुषु निर्धारणरूपं तव प्रश्नवचः सोऽहमित्यन्यव्यावृत्या मम प्रतिवचश्च निष्फलम् ।

एको व्यापी समश्शुद्धः निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः ॥ -८

स चैक एव, न तु प्रतिशरीरं भिन्नः । व्यापी साक्षितया सर्वव्यापकः । समः एकरूपः । न तु ज्ञानादिपरिणामैः अनेकरूपः । सर्वगतः, न तु देहपरिमाणः ।

परज्ञानमयोऽसद्भिः नामजात्यादिभिर्विभुः ।
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति ॥ -९

परज्ञानमयः नित्यज्ञानरूपः । न तु क्षणिकविज्ञानात्मकः । असद्भिरविद्यामयैः नामजात्यादिभिः । वर्तमानभूतभविष्यत्कालेषु

योगशून्यः, अतो विभुरीश्वरः स्वतन्त्र इत्यर्थः । निदाघं प्रति ऋभुः —

पुमान्सर्वगतो व्यापी आकाशवदवस्थितः ।
कुतः कुत्र क्व गन्तासीदित्येतस्यार्थवत्कथम् ॥ -१०

सोऽहं न गन्ता नागन्ता नैकदेशनिकेतनः ।
त्वं चान्ये च न च त्वं त्वं नान्येऽन्येनाहमप्यहम् ॥ -११

एवमेकमिदं विद्धि न भेदि सकलं जगत् ।
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ -१२

अप्रत्यक्षेप्यात्मनि प्रत्यक्षं भेदभ्रममाकाशदृष्टान्तेन सम्भावयन्नुपदिष्टमर्थं निगमयति द्वाभ्याम् –

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक्पृथक् ॥ -१३

एकस्समस्तं यदिहास्ति किञ्चित्
तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतत्
आत्मस्वरूपं, त्यज भेदमोहम् ॥ -१४

॥ इत्येते द्वितीयांशश्लोकाः ॥

## ॥ अथ तृतीयांशश्लोकाः ॥

**

एवं भेदमोहं त्यजतो विष्णुभक्तस्य मनस्स्वच्छत्वादिरूपं चिन्हमित्याह भटान्प्रति यमः –

विमलमतिरमत्सरः प्रशान्तः
शुभचरितोऽखिलसत्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायः
वसति सदा हृदि यस्य वासुदेवः ॥ -१

शुभं शुद्धं चरितं यस्य सः। अखिलानां सत्वानां मित्रभूतः। अस्ते निरस्ते मानमाये गर्वदम्भौ येन। प्रसन्नरूपतया च विष्णुभक्तचिह्नमित्याह —

वसति हृदि सनातने च तस्मिन्
भवति पुमाञ्जगतोऽस्य सौम्यरूपः ।
क्षितिरसरम्यमात्मनोऽन्तस्स्थितं
कथयति चारुतयैव सालपोतः ॥ -२

सुखप्रह्लादादिचिन्हं तदन्तस्थं परमानन्दमयं विष्णुं सूचयतीत्यत्र निदर्शनमाह क्षितीति। चारुतया कोमलतया, सालपोतः बालसालवृक्षः, आत्मनोऽन्तस्स्थितं क्षितिरसं कथयति सूचयतीत्यर्थः।

हृदि यदि भगवाननादिरास्ते
हरिरसिशङ्खगदाधरोऽव्ययात्मा ।
तदघमघविघातकर्तृभिन्नं
भवति कथं सति चान्धकारमर्के ॥ -३

तर्त्हि अघं अघविघातकर्त्रा भिन्नं विदीर्णं भवति । युक्तश्च विघातकसन्निधौ तद्विरोधिविनाश इत्याह कथमर्के सति अन्धकारं भवतीति ।

सकलमिदमहं च वासुदेवः
परः पुमान्परमेश्वरस्स एकः ।
इति मतिरचला भवत्यनन्ते
हृदयगते व्रज तान्विहाय दूरात् ॥ -४

एवं परमहंसस्य विष्णुभक्तस्यासाधारणं चिन्हमुक्त्वा, तस्यैवेदानीं कतिपयान्धर्मानाह सगरं प्रत्यौर्वः —

त्रैवर्गिकांस्त्यजेत्सर्वान् आरम्भानवनीपते ।
मित्रादिषु समो मित्रः समस्तेष्वपि जन्तुषु ॥ -५

जरायुरण्डजादीनां वाङ्मनःकर्मभिः क्वचित् ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥ -६

एकरात्रं वसेद्ग्रामे पञ्चरात्रं वसेत्पुरे ।
तथा तिष्ठेद्यथा प्रीतिः द्वेषो वास्य न जायते ॥ -७

प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने ।
काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥ -८

भुक्तवन्तो जना यस्मिंस्तस्मिन् काले । प्रशस्ताः श्रेष्ठास्त्रयो वर्णास्तेषाम् ।

कामक्रोधौ तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राण्णिर्ममो भवेत् ॥ -९

अभयं सर्वभूतेभ्यः दत्वा यश्चरते मुनिः ।
तस्यापि सर्वभूतेभ्यः न भयं विद्यते क्वचित् ॥ -१०

मोक्षाश्रमं यः कुरुते यथोक्तं
शुचिस्तु सङ्कल्पितबुद्धियुक्तः ।
अनिन्धनज्योतिरिव प्रशान्तः
स ब्रह्मलोकं श्रयते द्विजातिः ॥ -११

ब्रह्मलोकं ब्रह्मस्वरूपं, "लोकं जयती"ति परमफलोक्तेः ।

शमं नयति यः क्रुद्धान् सर्वबन्धुरमत्सरी ।
भीताश्वासनकृत्साधुः स्वर्गस्तस्याल्पकं फलम् ॥ -१२

पापेप्यपापः पुरुषे ह्यभिधत्ते प्रियाणि यः ।
मैत्रीद्रवान्तःकरणः तस्य मुक्तिः करे स्थिता ॥ -१३

पापे पापकारिण्यपि पुरुषे उपकर्ता, परुषभाषिण्यपि प्रियभाषी ।

॥ इति तृतीयांशश्लोकाः ॥

## ॥ अथ चतुर्थांशश्लोकाः ॥

**

इदानीं परमहंसस्य वैराग्यमेव मुख्यो धर्म इति दर्शयन्नाह सौभरिः ---

अमृत्युतो नैव मनोरथानां
अन्तोऽस्ति विज्ञातमिदं मयाद्य ।
मनोरथासक्तिपरस्य चित्तं
न जायते वै परमार्थसङ्गि ॥ -१

निस्सङ्गता मुक्तिपदं यतीनां
सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यते स
सङ्गेन योगी किमुताल्पसिद्धिः ॥ -२

यस्मादेवं, तस्मात् --

सर्वस्य धातारमचिन्त्यशक्तिं
अणोरणीयांसमतिप्रमाणम् ।
सितासितं चेश्वरमीश्वराणां
आराधयिष्ये तपसैव विष्णुम् ॥ -३

अतिप्रमाणं स्वप्रकाशत्वेन प्रमाणमतिक्रम्य स्थितं, सितं शुद्धं, प्रतिबिम्बरूपजीवांशेन । असितमीश्वररूपेण ।

तस्मिन्नशेषौजसि सर्वरूपे-

ण्यव्यक्तविस्पष्टतनावनन्ते ।

ममाचलं चित्तमपेतदोषं

सदाऽस्तु विष्णावभवाय भूयः ॥ -४

अशेषौजसि सर्वशक्तौ, अव्यक्तं कारणं, विस्पष्टं कार्यं, तदुभयम् तनुर्यस्य तस्मिन् ।

समस्तभूतादमलादनन्तात्

सर्वेश्वरादन्यदनादिमध्यात् ।

यस्मान्न किञ्चित्तमहं गुरूणां

परं गुरुं संश्रयमेमि विष्णुम् ॥ -५

संश्रयमेमि शरणं व्रजामि । वैराग्यमेव प्रपञ्चयन्नाह ययातिः —

न जातु कामः कामानामुपभोगेन शाम्यति ।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ -६

कृष्णवर्त्मा अग्निः ।

यत्पृथिव्यां व्रीहि यवं हिरण्यं पशवस्स्त्रियः ।

एतस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥ -७

कथं तर्हि विषयसुखपर्याप्तिस्स्यादित्याह द्वाभ्याम् -

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।

समदृष्टेस्तथा पुंसः सर्वास्सुखमया दिशः ॥ -८

पापकं भावं रागद्वेषादिमयम् ।

या दुस्त्यजा दुर्मतिभिः जीर्यतो या न जीर्यति ।
तां तृष्णां सन्त्यजेत्प्राज्ञः सुखेनैवाभिपूर्यते ॥ -९

तस्मादेतामहं हित्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैस्सह ॥ -१०

॥ इति चतुर्थांशश्लोकाः ॥

## ॥ अथ पञ्चमांशश्लोकाः ॥

ब्रह्मात्मकस्य विष्णोः स्वरूपमाह ब्रह्मा —

एकस्त्वमग्र्यं परमं पदं यत्
पश्यन्ति त्वा सूरयो ज्ञानदृश्यम् ।
त्वत्तो नान्यत्किञ्चिदस्ति स्वरूपं
यच्चाभूतं यच्च भव्यं परात्मा ॥ -१

अक्रूरः —

सन्मात्ररूपिणेऽचिन्त्यमहिम्ने परमात्मने ।
व्यापिने नैकरूपैकस्वरूपाय नमोऽस्तु ते ॥ -२

अनेकरूपः स चाप्यनेकरूपश्चेति । तस्मै कार्यकारणरूपाय ।

सत्वभूताय तेऽचिन्त्य हविर्भूताय ते नमः ।
नमोऽविज्ञातरूपाय पराय प्रकृतेः प्रभो ॥ -३

हेऽचिन्त्य, हविर्भूतो यस्तस्मै । "यत्पुरुषेण हविषा" इति श्रुतेः । अविज्ञातं रूपं यस्य तस्मै ।

न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः ।
तद्ब्रह्म परमं नित्यमविकारी भवानजः ॥ -४

औपाधिकं सनामत्वमाह —

न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः ।
ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यते ॥ -५

रूपानन्तत्वेनानन्तनामत्वं प्रपञ्चयन्नाह –

सर्वात्मन्, त्वमज विकल्पनाभिरेतैः
देवाद्यैर्भवसि हि यैरनन्त विश्वम् ।
विश्वात्मा त्वमसि विकारहीनमेतत्
सर्वस्मान्न भगवतोऽस्ति विश्वमेतत् ॥ -६

मुचुकुन्दः –

शब्दादिहीनमजरममेयं क्षरवर्जितम् ।
अवृद्धिनाशं तद्ब्रह्म त्वमाद्यन्तविवर्जितः ॥ -७

त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम् ।
शाश्वती प्राप्यते केन परमेश्वर निर्वृतिः ॥ -८

सोऽहं शरणं त्वामपारमप्रमेयं
सम्प्राप्तः परमं पदं यतो न किञ्चित् ।
संसारश्रमपरितापतप्तचेताः
निर्वाणे परिणतधाम्नि साभिलाषः ॥ -९

परिणतधाम्नि परिपक्वयोगिनामाश्रये निर्वाणे । अदितिः —

सितदीर्घादिनिश्शेषकल्पनापरिवर्जितः ।
जन्मादिभिरसंस्पृष्टः स्वप्नादिपरिवर्जितः ॥ -१०

सितदीर्घादिभिः वर्णपरिमाणादिभिः अशेषाभिः कल्पनाभिः परिवर्जितः । स्वप्नाद्यवस्थाभिः परिवर्जितः । अथ स्वरूपानुवादपूर्वकं तन्निवृत्तिं प्रार्थयते द्वाभ्याम् –

माया तवेयमज्ञातपरमार्थातिमोहिनी ।
अनात्मन्यात्मविज्ञानं यया मूढो विमुह्यति ॥ -११

अज्ञातपरमार्थानामतिमोहिनी । मोहनमेवाह अनात्मनीति ।

यैस्स्वधर्मपरैर्नाथ नरैराराध्यते भवान् ।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ -१२

॥ इति पञ्चमांशश्लोकाः ॥

## ॥ अथ षट्त्रिंशश्लोकाः ॥



कः पुनः परमात्मा ? इत्याह श्रीपराशरः –

न सन्ति यस्मिन्सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥ -१

आत्मनः पुरुषात्परे पुरुषोत्तमे ।

तद्ब्रह्म परमं धाम परमात्मा स चेश्वरः ।
स विष्णुस्सर्वमेवेदं यतो नावर्तते यतिः ॥ -२

परमात्मा च सर्वेषां आधारः परमेश्वरः ।
विष्णुनाम्ना स वेदेषु वेदान्तेषु च गीयते ॥ -३

ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्तिस्स इज्यते ।
निवृत्ते योगिभिर्मार्गे विष्णुर्मोक्षफलप्रदः ॥ -४

योगिभिर्निवृत्ते मार्गे स्थिते ज्ञानयोगेन इज्यत इत्यर्थः ।
इदानीं अहोरात्रकल्पनापि तस्य नास्तीत्याह —

नैवाहस्तस्य न निशा नित्यस्य परमात्मनः ।
उपचारस्तथाप्येषु तस्येशस्य द्विजोच्यते ॥ -५

तथाप्येषु उपचारः । सर्वोत्कर्षप्रतिपत्तये क्रियत इत्यर्थः ।

आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यान्तिकं लयम् ॥ -६

आध्यात्मिकादि तापत्रयं दुस्सहमिति ज्ञात्वा बुधो विवेकी उत्पन्नवैराग्यस्सन् गुरूपदेशादिना उत्पन्नज्ञानः आत्यन्तिकं लयं सर्वात्मनाज्ञानतत्कार्यनाशात्मकं मोक्षं प्राप्नोतीत्यर्थः । वैराग्यस्योपायान्तरमाह –

यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते ।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥ -७

एवं दुःखानुसन्धानलब्धविवेकवैराग्यस्य पुंसो मुमुक्षैव युक्ता इत्याशयेनाह –

इति संसारदुःखानां तापतापितचेतसाम् ।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥ -८

निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिः एकान्तात्यन्तिकी मता ॥ ९

निरस्तातिशयः आह्लादः निर्वृतिः यस्मिन् सुखे, तद्भावः तदात्मत्वमेवैकं लक्षणं यस्यास्सा । तथा किञ्च एकान्ता भगवन्निष्ठामात्रेणावश्यंभाविनी, न तु ऋत्विगादिवैगुण्येन कर्मफलवदनैकान्तिकी । आत्यन्तिकी नित्या भगवत्प्राप्तिरेव, अशेषदुःखजातस्य भेषजं मता सम्मतेत्यन्वयः । इदानीं भगवतः परमं तत्त्वमाह त्रिभिः –

यत्तदव्यक्तमजरं अचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ -१०

विभुं सर्वगतं नित्यं भूतयोनिमकारणम् ।
व्याप्यव्याप्तं यतस्सर्वं तद्वै पश्यन्ति सूरयः ॥ -११

विभुं प्रभुं, सर्वगतं अनवच्छिन्नं, व्यापिनं सर्वकार्यानुगतं, स्वयमन्येनाव्याप्तं, यतस्सर्वं भवति, तत्परं ब्रह्मैव सूरयः पश्यन्तीन्वयः –

तद्ब्रह्म तत्परं धाम तदेव मोक्षकाङ्क्षिणाम् ।
श्रुतिवाक्योदितं ब्रह्म तद्विष्णोः परमं पदम् ॥ -१२

तस्मिन्नेव भगवच्छब्दो मुख्य इत्याह —

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्दने ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥ -१३

शुद्धेऽसङ्गे महाविभूत्याख्ये । वासुदेवशब्दोऽप्यत्रैव मुख्य इति वदन् तस्यार्थमाह –

सर्वाणि यत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवो यतस्ततः ॥ -१४

स सर्वभूतिं प्रकृतिं विकारान्
गुणदिदोषांश्च मुने व्यतीतः ।

अतीतसर्वावरणोऽखिलात्मा
तेनास्तृतं यद्भुवनान्तराले ॥ -१५

संज्ञायते येन तदस्तदोषं
शुद्धं परं निर्मलमेकरूपम् ।
सन्दृश्यते वाप्यधिगम्यते वा
तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ -१६

परमात्मनो ज्ञानदर्शनप्राप्तयो येन भवन्ति तत्परं ज्ञानमित्यर्थः । इदानीं परमात्मनो दर्शनप्राप्तौ कारणान्तरमाह —

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमात्मनः ।
स्वाध्याययोगसम्पत्या परमात्मा प्रकाशते ॥ -१७

स्वाध्यायादिः प्रणवादिजपः, योगः संयमः । तत्र स्वाध्यायानन्तरं योगमभ्यसेत् । योगानन्तरं च स्वाध्यायं कुर्यात् । एवं तयोस्सम्पत्या समृद्ध्या परमात्मा प्रकाशते । ननु चक्षुरादिभिरात्मनस्स्फुरणात् किमर्थमेतद्द्वयम् ? तत्राह –

तदीक्षणाय स्वाध्यायः चक्षुर्योगस्ततः परम् ।
न मांसचक्षुषा द्रष्टुं ब्रह्मरूपस्स शक्यते ॥ -१८

इदानीं देहादावहंमानस्य आविद्यकत्वमुपपादयति खाण्डिक्यजनकं प्रति केशिध्वजः —

पञ्चभूतात्मके देहे देही मोहतमोवृतः ।
अहमेतदितीत्युच्चैः करोति कुमतिर्मतिम् ॥ -१९

पञ्चभूतात्मके देहे देही, कुमतिः विपर्ययमतिः सन्, अहमेव एतदिति मतिं कुरुते । द्वितीयेतिशब्दः तदावृत्त्यर्थः । विपर्यासे हेतुः मोहतमसा स्वरूपाज्ञानेनावृत इति । अज्ञाते हि वस्तुस्वरूपे विपर्यासो भवतीत्यर्थः । आविद्यकत्वमेव स्फुटयति द्वाभ्याम् —

कलेवरोपभोग्यं हि गृहक्षेत्रादिकं च कः ।
अदेहेऽस्यात्मनि प्राज्ञः ममेदमिति मन्यते ॥ -२०

अदेहे देहव्यतिरिक्ते आत्मनि सति देहोपभोग्यं गृहादि मदीयमिति कः प्राज्ञो मन्यते ।

इत्थं च पुत्रपौत्रेषु तद्देहोत्पादितेषु कः ।
करोति पण्डितस्साम्यं अनात्मनि कलेवरे ॥ -२१

अनात्मनि सति तदुत्पादितेषु पुत्रादिषु कः पण्डितः साम्यं कुर्यात् ? तदेवं देहगेहादिषु अहंममाभिमानयोराविद्यकत्वं समर्थितम् । इदानीं तत्पूर्वकं कर्तृत्वभोक्तृत्वाद्यपि अविद्यामय मेवेत्याह —

सर्वं देहोपभोगाय कुरुते कर्म मानवः ।
देहश्चान्यो यदा पुंसस्तदाऽबन्धाय तत्परम् ॥ -२२

देहं च यदा पुंसस्सकाशादन्यं मन्यते तदा पुंसो भोगसम्बन्धो नास्त्येव। तदा केवलं तत्कर्म तस्याबन्धायैव स्यात्। देहोपभोगायेति यदुक्तं तदेव दृष्टान्तेन समर्थयते द्वाभ्याम्

मृन्मयं हि यथा गेहं लिप्यते वै मृदम्भसा।
पार्थिवोऽयं तथा देहः मृद्वंव्यालेपनस्थितिः॥ -२३

मृदम्बुभ्यामन्नपानरूपाभ्यां आलेपनस्थितिर्यस्य स तथा।

पञ्चभूतात्मकद्रव्यैः पञ्चभूतात्मकं वपुः।
आप्यायते यदि ततः पुंसो भोगोऽत्र किं कृतः॥ -२४

कथं तस्यात्मनि दुःखादिप्रतीतिस्तत्राह द्वाभ्याम् —

जलस्य चाग्निसंस्पर्शात् स्थालीसङ्गात्तथापि हि।
शब्दोद्रेकादिकान्धर्मान् सत्करोति यथा मुने॥ २५

तथात्मा प्रकृतौ सङ्गादहंमानादिदूषितः।
भजते प्राकृतान्धर्मान् पुरस्तेभ्यो हि सोऽव्ययः॥ -२६

अग्निसंसर्गेण तप्तायास्स्थाल्यास्सङ्गात् तदन्तस्स्थितं जलम्। शब्दमुद्रेकं च। आदिशब्दाच्छोषणमुष्णत्वादि च भजते। तथात्मा प्राकृतान्दुःखादिधर्मान्भजते। परमार्थतस्तु सतेभ्योऽन्यः शुद्धः, अव्ययो नित्यश्च। शुद्धस्वरूपमेवाह द्वाभ्याम् —

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तत् ज्ञानं ब्रह्मसंज्ञितम् ॥ -२७

प्रत्यस्तमितः प्रलीनो भेदो यस्मिन्, तत्तथा वचसामगोचरत्वेऽपि आत्मसंवेद्यम् स्वानुभवगम्यम् ।

तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् ।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥ -२८

विश्वस्य स्वरूपाद्वैरूप्यं वैलक्षण्यमेव । लक्षणं यस्य तत् ज्ञानं परमात्मनो विष्णोः परं रूपमित्यन्वयः । ननु तर्हि ज्ञानेनैव व्यवधानात् कथमात्मब्रह्मैक्यम् ? तत्राह –

तद्भावभावनापन्नः ततोऽसौ परमात्मना ।
भवत्यभेदी, भेदश्च तस्याज्ञानकृतो भवेत् ॥ -२९

ननु ज्ञानिनो भेदप्रतीतिरस्त्येव । अन्यथोपदेशाद्यसिद्धेः, तत्राह भेदश्चेति । बाधित एव । कथंचिदनुवर्तत इत्यर्थः । तस्माद्-ज्ञानं तत्कार्यं च संस्कारं विनाश्य, स्वयमेवाज्ञानकार्यमनोवृत्ति-रूपत्वाद्दग्धेन्धनानलवत् ज्ञानेऽपि विनष्टे सति न पुनस्संसार-प्ररोहशङ्केत्याह –

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ -३०

इदानीमशेषपापप्रणाशमन्तरा यथोक्तमद्वितीयात्मज्ञानं न सम्भवति । तत्प्रणाशोपायमाह श्रीपराशरः —

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ -३१

अवशेनापि यदृच्छयापि यस्य नाम्नि कीर्तिते सति, यथा कस्मात् आगतं सिंहं दृष्ट्वा त्रस्ताः हरिणमवरुन्धन्तो वृकाः तं विसृज्य पलायन्ते तद्वत् । भक्त्या तत्कीर्तने फलमाह —

यन्नामकीर्तनं भक्त्या विलायनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ -३२

प्रायश्चित्तैः पापमेव नश्यति तत्संस्कारस्त्ववशिष्यते । इदं त्वशेषाणां संस्काराणां पापानां विनाशकं, न चान्येन निश्शेषपापक्षयस्स्यात् इति दृष्टान्तेनाह यथा धातूनां सुवर्णादीनां प्रक्षालनादि धात्वन्तरसंयोगजं मलं न नाशयति, किन्तु पावक एव । अतस्सर्वोत्तममिदमेवेत्यर्थः । हरिस्मृतेः फलमाह —

कलिकल्मषमत्युग्रं नरकावाप्तिदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्र च संस्मृते ॥ -३३

यत्र यस्मिन् —

स सर्वस्सर्ववित्सर्वस्वरूपो रूपवर्जितः ।
भगवान्कीर्त्यते विष्णुरत्र पापप्रणाशनैः ॥ -३४

हरेः कीर्तनमात्रेण पापक्षयो भवतीति यदुक्तं तत्कैमुतिकन्यायेनोपपादयति —

यस्मिन्न्यस्तमतिर्न याति नरकं, स्वर्गोऽपि यच्चिन्तने

विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ।

मुक्तिं चेतसि यस्स्थितोऽमलधियां पुंसां ददात्यव्ययः

किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥ -३५

न्यस्ता निक्षिप्ता मतिर्येन सः । अच्युतैकचित्त इति यावत् । प्रमादकृतैरघैर्नरकं न याति, तस्मिन्पापसंश्लेषाभावात् । यस्य चिन्तने क्रियमाणे स्वर्गप्राप्तिरपि विघ्नप्राया, यस्मिन् निवेशितः आत्मा मनश्च समाधिना येन । तस्य ब्राह्मो लोकोऽपि अतितुच्छः । यथा कथंचिदपि यश्चेतसि स्थितः मुक्तिमेव ददाति । यत्रैव स्वार्थमेव केवलं मनोमात्रेणाच्युतनिष्ठानां ईदृशं फलगौरवं, तथा तन्नामकीर्तनेन परेषामप्यघं क्षपयतां, स्वकीयाघनाशः किं चित्रमित्यर्थः । इदानीं समस्तजीवानां भगवत्सकाशान्मोक्षप्राशासानः पुराणार्थं निगमयति —

इति विविधमजस्य यस्य रूपं

प्रकृतिपरात्ममयं सनातनस्य ।

प्रदिशतु भगवानशेषपुंसां

हरिरपजन्मजरादिकां स सिद्धिम् ॥ -३६

प्रकृतिः व्यक्ताव्यक्तरूपा, परं ईश्वरः, आत्मा पुरुषस्तन्मयम् । अपगतजन्मजरादिकां मोक्षलक्षणां सिद्धिं प्रदिशत्वित्याशीर्वादः ॥

॥ एते षष्ठांशश्लोकाः ॥

****

विष्णुपुराणप्रथितां चर्यासार्यैकसेवितासेताम् ।
अनुतिष्ठन्तु यतीन्द्राः कैवल्यानन्दकाङ्क्षिणस्सर्वे ॥

॥ इति विष्णुपुराणसारसङ्ग्रहस्समाप्तः ॥



॥ अथ सूतसंहितासारसङ्ग्रहः ॥

**

योगासने समासीनं विद्युत्पिङ्गजटाधरम् ।
कराङ्कुरितचिन्मुद्रं कंचिद्देशिकमाश्रये ॥ -१

विद्यामरन्दनिष्यन्दनन्दच्छिष्यमधुव्रतम् ।
श्रीसत्परशिवेन्द्रश्रीपादपद्ममुपास्महे ॥ -२

नत्वा व्यासमुनिं सूतसंहितायां परात्मनोः ।
ऐक्यप्रकाशिकस्सारसङ्ग्रहः क्रियते मया ॥ -३

शिवमाहात्म्यखण्डे नैमिशान्प्रति सूतः –

यस्याऽपरोक्ष विज्ञानमस्ति वेदान्तवाक्यजम् ।
तस्य नास्ति नियोज्यत्वमिति वेदार्थनिर्णयः ॥ -४

वर्णानामाश्रमाः प्रोक्ताः सर्वशास्त्रार्थवेदिभिः ।
तेषां वर्णाश्रमस्थानां वेदकिङ्करता सदा ॥ -५

अस्ति चेद्ब्रह्मविज्ञानं स्त्रियो वा पुरुषस्य वा ।
वर्णाश्रमसमाचारः तयोर्नास्त्येव सर्वदा ॥ -६

अविज्ञायात्मविज्ञानं स्ववर्णाश्रमसास्तिकाः ।
जहाति यदि मूढात्मा पतत्येव न संशयः ॥ -७

ज्ञानयोगखण्डे बृहस्पतिं प्रतीश्वरः —

वर्णाश्रमसमाचारात्प्रसन्ने परमेश्वरे ।
साक्षात्तद्विषयं ज्ञानमचिराज्जायतेऽनघ ॥ -८

अज्ञाने सति संसारः ज्ञाने स कथमुच्यते ।
तस्मात् ज्ञानेन मुक्तिस्स्यादज्ञानस्य क्षयान्मुने ॥ -९

अहो ज्ञानं परित्यज्य मायया परिमोहिताः ।
नरकेषु हि पच्यन्ते स्वस्मकल्पेषु दुःखिताः ॥ -१०

यद्यात्मा मलिनः कर्ता भोक्ता च स्यात्स्वभावतः ।
नास्ति तस्य विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ -११

आत्मायं केवलस्स्वच्छश्शाश्वतस्सूक्ष्मस्सनातनः ।
अस्ति सर्वान्तरस्साक्षी चिन्मात्रस्सुखविग्रहः ॥ -१२

अयं स भगवानीशः स्वयञ्ज्योतिस्सनातनः ।
अस्माद्विजायते विश्वमत्रैव प्रविलीयते ॥ -१३

य एवम्भूतमात्मानं अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ -१४

ब्राह्मण्यं प्राप्य लोकेऽस्मिन् मूको वा बधिरो भवेत् ।
नापक्रामति संसारात्स खलु ब्रह्महा भवेत ॥ -१५

तस्मात्सर्वप्रयत्नेन श्रद्धया गुरुभक्तितः ।
उत्सृज्य प्राकृतं भावं शिवोऽहमिति चिन्तयेत् ॥ -१६

आत्मस्थं यः शिवं त्यक्त्वा बहिस्स्थं यजते शिवम् ।
हस्तस्थं पिण्डमुत्सृज्य लिहेत्कूर्परमात्मनः ॥ -१७

सर्वभूतस्थमात्मानं विशुद्धं ज्ञानदेहिनाम् ।
स्वात्मन्यपश्यन्बाह्येषु पश्यन्नपि न पश्यति ॥ -१८

अशरीरं शरीरेषु महान्तं विभुमीश्वरम् ।
आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ -१९

विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ -२०

आत्मा सत्यस्सदा नित्यस्सुखरूपस्स्वयंप्रभः ।
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो विभात्ययम् ॥ -२१

अज्ञानमलपङ्कं यः क्षालयेत् ज्ञानतोयतः ।
स एव सर्वदा शुद्धः नान्यः कर्मरतो हि सः ॥ -२२

ज्ञानाम्भसैव शुद्धस्य कृतकृत्यस्य योगिनः ।
कर्तव्यं नास्ति लोकेऽस्मिन् अस्ति चेन्न स तत्त्ववित् ॥ -२३

लोकत्रयेऽपि कर्तव्यं किञ्च नास्त्यात्मवेदिनाम् ।
इहैव जीवन्मुक्तास्ते "इह चेदि" ति हि श्रुतिः ॥ -२४

अहो ज्ञानामृतं मुक्त्वा मायया परिमोहिताः ।
परिभ्रमन्ति संसारे सदाऽसारे नराधमाः ॥ -२५

ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ।
स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ -२६

ज्ञानामृतरसः प्रायस्तेन नास्वादितो भवेत् ।
यो वान्यत्रापि रमते तं विहायैव दुर्मतिः ॥ -२७

आत्मैवेदं जगत्सर्वं इति जानन्ति पण्डिताः ।
अज्ञानेनावृता मर्त्याः न विजानन्ति शङ्करम् ॥ -२८

अशरीरो महानात्मा सुखदुःखैर्न बाध्यते ।
क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्युच्यते बुधैः ॥ -२९

तस्मादज्ञानमूलानि सर्वदुःखानि देहिनाम् ।
ज्ञानेनैव निवृत्तिस्स्यादज्ञानस्य न कर्मभिः ॥ -३०

नास्ति ज्ञानात्परं किञ्चित्पवित्रं पापनाशनम् ।
तदभ्यासादृते नास्ति संसारच्छेदकारणम् ॥ -३१

प्रक्षीणोऽशेषपापस्य ज्ञानाभ्यासे भवेन्मतिः ।
पापोहतबुद्धीनां तद्वार्तापि सुदुर्लभा ॥ -३२

नित्यस्सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकस्सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ -३३

यस्यैवं परमात्मायं प्रत्यक्भूतः प्रकाशितः ।
स याति परमं भावं स्वकं साक्षात्परामृतम ॥ -३४

यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा सम्पद्यते स्वयम ॥ -३५

यदा सर्वाणि भूतानि स्वात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा ॥ -३६

यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतः ॥ -३७

यदा जन्मजरादुःखव्याधीनामेकभेषजम् ।
केवलं ब्रह्मविज्ञानं प्राप्यतेऽसौ सदाशिवः ॥ -३८

ज्ञानं वेदान्तविज्ञानं अज्ञानमितरन्मुने ।
अहो ज्ञानस्य माहात्म्यं मया वर्णितुं शक्यते ॥ -३९

अत्यल्पोऽपि यथा दीपः सुमहन्नाशयेत्तमः ।
ज्ञानाभ्यासस्तथाऽल्पोऽपि महत्पापं व्यपोहति ॥ -४०

यथा वह्निर्महादीप्तश्शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहति क्षणात् ॥ -४१

यद्वन्मन्त्रबलोपेतः क्रीडन्सर्पैर्न दंश्यते ।
क्रीडन्न लिप्यते ज्ञानी तद्वदिन्द्रियपन्नगैः ॥ -४२

पद्मपत्रं यथा तोयैः स्वस्थैरपि न लिप्यते ।
तथा शब्दादिभिर्ज्ञानी विषयैर्न लिप्यते ॥ -४३

मन्त्रौषधबलैर्यद्वत् जीर्यते भक्षितं विषम् ।
तद्वत्सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात ॥ -४४

ये द्विषन्ति महात्मानं ज्ञानवन्तं नराधमाः ।
पच्यन्ते रौरवे कल्पमेकान्ते नरके सदा ॥ -४५

दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एव वा ।
ज्ञानाभ्यासरतः पूज्यः किं पुनर्ज्ञानवान्नरः ॥ -४६

यस्य गेहं समुद्दिश्य ज्ञानी गच्छति सुव्रतः ।
तस्य क्रीडन्ति पितरः यास्यामः परमां गतिम् ॥ -४७

यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते ।
तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ -४८

महात्मनो ज्ञानवतः प्रदर्शनात्

सुरेश्वरत्वं ते झटिति प्रयान्ति ।

विहाय संसारमहोदधौ नराः
रमन्ति तं पापबलादहो मुने ॥ -४९

स्वस्मिन्नमन्त इति सुराः ब्रह्मविदः तेषामीश्वरः तत्त्वम् ।

महानिधिं प्राप्य, विहाय तं वृथा
विचेष्टते मोहबलेन बालकः ।
यथा, तथा ज्ञानिनमीश्वरेश्वरं
विहाय मोहेन चरन्ति मानवाः ॥ -५०

अहो महान्तं परमार्थदर्शिनं
विहाय मायापरिमोहिता नराः ।
हिताय लोके विचरन्ति ते मुने
विषं पिबन्त्येव महामृतं विना ॥ -५१

बहुनोक्तेन किं ? सर्वं सङ्ग्रहेणोपपादितम् ।
श्रद्धया गुरुभक्त्या च विद्धि वेदान्तसङ्ग्रहम् ॥ -५२

मुक्तिखण्डे विष्णुं प्रतीश्वरः –

वेदमार्गैकनिष्ठानां मद्भक्तानां महात्मनाम् ।
मुक्तौ प्रवृत्तिपर्यन्ता श्रद्धा साक्षाद्विजायते ॥ -५३

सायुज्यरूपा परमा मुक्तिर्जीवपरात्मनोः ।
परमार्थैकतादात्म्यरूपा ह्यज्ञाननाशतः ॥ -५४

यस्य मुक्तिरभिव्यक्ता स्वतस्सिद्धात्मरूपिणी ।
तस्य प्रारब्धकर्मान्तं जीवन्मुक्तिः प्रकीर्तिता ॥ -५५

स्वतस्सिद्धात्मभूतायां मुक्तेरज्ञाननाशतः ।
अभिव्यक्तिर्महाविष्णो मुक्तत्वं दग्धवस्त्रवत् ॥ -५६

फलोपभोगात्प्रारब्धकर्मणस्संक्षये हरे ।
प्रतिभासो निवर्तेत प्रपञ्चस्य न संशयः ॥ -५७

भूतपूर्वानुसन्धानात् मुक्त इत्युच्यते मया ।
न स मुक्तो न बद्धश्च न मुमुक्षुर्न चापरः ॥ -५८

य एवमात्मनात्मानं सुदृढं वेद केशव ।
स एव परमज्ञानी नेतरो माययावृतः ॥ -५९

आत्मनः परमा मूर्तिः ज्ञानदेव न कर्मणा ।
ज्ञानं वेदान्तवाक्यानां महातात्पर्यनिर्णयात् ॥ -६०

उत्पन्नायां मनोवृत्तौ महत्यामम्बुजेक्षण ।
अभिव्यक्तं भवेदेतत् ब्रह्मैवात्र विचारतः ॥ -६१

अनेनैवात्मनोऽज्ञानं आत्मन्येव विलीयते ।
विलीने स्वात्मनोऽज्ञाने द्वैतं वस्तु विनश्यति ॥ -६२

द्वैतवस्तुविनाशेन शोभनाशोभना मतिः ।
क्षीयते, मतिनाशेन रागद्वेषौ विनश्यतः ॥ -६३

धर्माधर्मक्षयाद्देहो विषया इन्द्रियाण्यपि ।
नश्यन्त्येव न सन्देहः "ज्ञात्वा देहमि" ति श्रुतिः ॥ -६४

तस्मादज्ञानमूलस्य संसारस्य क्षयो भवेत् ।
आत्मनस्तत्वविज्ञानात् तत्त्व ब्रह्मैव केवलम् ॥ -६५

यथा सर्पदमंशस्य तत्त्वं दण्डादि केवलम् ।
अस्य संसारिणस्तत्वं तथा ब्रह्मैव केवलम् ॥ -६६

यश्शरीरेन्द्रियादिभ्यः विभिन्नं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयम्प्रभम ॥ -६७

परतत्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
योऽवस्थात्रयनिर्मुक्तमवस्थासाक्षिणं सदा ॥
महादेवं विजानाति सोऽतिवर्णाश्रमी भवेत् ॥ -६८

यो वेदान्तमहावाक्यश्रवणेनैव केशव ।
आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत् ॥ -६९

वर्णाश्रमादयो देहे मायया परिकल्पिताः ।
नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा ॥ -७०

इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
आदित्यसन्निधौ लोकः चेष्टते स्वयमेव तु ॥
तथा मत्सन्निधावेव चेष्टते स्वयमेव तत् ॥ -७१

इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
सुवर्णे हारकेयूरकटकस्वस्तिकादयः ॥ -७२

कल्पिता मायया तद्वत् जगन्मय्येव सर्वदा ।
इति यो वेद वेदान्तैस्सोऽतिवर्णाश्रमी भवेत् ॥ -७३

शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव कल्पितम् ॥ -७४

इति यो वेद वेदान्तैस्सोऽतिवर्णाश्रमी भवेत् ।
चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ॥ -७५

अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ।
व्योमवत्सर्वदा व्याप्तस्सर्वबन्धविवर्जितः ॥ -७६

एकरूपो महादेवः स्थितस्सोऽहं परामृतः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥ -७७

विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्नहि ॥ -७८

इति यो वेद वेदान्तैस्सोऽतिवर्णाश्रमी भवेत् ।
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ॥ -७९

तथा जाग्रत्प्रपञ्चोऽयं मयि मायाविजृम्भितः ।
इति यो वेद वेदान्तैस्सोऽतिवर्णाश्रमी भवेत् ॥ -८०

अस्य वर्णाश्रमाचारः गलितस्स्वात्मदर्शनात् ।
स तान् वर्णाश्रमान्सर्वान् अतीत्य स्वात्मनि स्थितः ॥ -८१

योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदान्तवेदिभिः ॥ -८२

तस्मादन्यगता वर्णा आश्रमा अपि केशव ।
आत्मन्यारोपिता एव भ्रान्त्या तेनात्मवेदिनाम् ॥ -८३

न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
आत्मविज्ञानिनामस्ति तथा नान्यज्जनार्दन ॥ -८४

आत्मविज्ञानिनां निष्ठामीदृशीमम्बुजेक्षण ।
मायया मोहिता मर्त्याः नैव जानन्ति सर्वदा ॥ -८५

न मांसचक्षुषा निष्ठा ब्रह्मविज्ञानिनामियम् ।
द्रष्टुं शक्या स्वतस्सिद्धाऽविदुषां सैव केशव ॥ -८६

एवमात्मानमद्वन्द्वं निर्विकारं निरञ्जनम् ।
नित्यशुद्धं निराभासं संविन्मात्रं परामृतम् ॥ -८७

यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ।
सोऽतिवर्णाश्रमी नान्यः स एव गुरुसत्तमः ॥ -८८

यत्र नित्यं स्थितो ज्ञानी तत्राहं सर्वदा स्थितः ।
निमेषं वा तदर्धं वा यत्र ज्ञानी हरे स्थितः ॥ -८९

तत्र सर्वाणि तीर्थानि तिष्ठन्त्येव न संशयः ।
योऽनिष्टं ब्रह्मनिष्ठस्य करोत्यज्ञानतोऽपि वा ॥ -९०

विदुषस्स ममानिष्टं करोत्येव न संशयः ।
आत्मनिष्ठं च मां विष्णोः विभिन्नं प्रवदन्ति ये ॥ -९१

ते मूढा एव मनुजा नात्र कार्या विचारणा ।
तस्मादात्मविदस्सर्वैः पूजनीया विशेषतः ॥ -९२

वेदवेदान्तवाक्यानां मयार्थस्सङ्ग्रहेण ते ।
कथितस्सारभूतोऽयं शेषोऽन्यो ग्रन्थविस्तरः ॥ -९३

शास्त्राण्यधीत्य मेधावी गुरोरभ्यस्य तान्यपि ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ -९४

दुर्लभं प्राप्य मानुष्यं तत्रापि नरविग्रहम् ।
ब्राह्मण्यं च महाविष्णो वेदान्तश्रवणादिना ॥ -९५

अतिवर्णाश्रमं रूपं सच्चिदानन्दमद्वयम् ।
यो न जानाति सोऽविद्वान् कदा मुक्तो भविष्यति ॥ -९६

यस्मिन्देहे दृढज्ञानं अपरोक्षं विजायते ।
तद्देहनाशपर्यन्तं एवं संसारदर्शनम् ॥ -९७

पुरापि नास्ति संसारदर्शनं परमार्थतः ।
कथं तद्दर्शनं देहविनाशादूर्ध्वमुच्यते ॥ -९८

यज्ञवैभवखण्डे मुनीन्प्रति सूतः —

एकैव परमा शक्तिर्माया दुर्घटकारिणी ।
शिवस्यानन्दरूपस्य विद्यया तस्य नश्यति ॥ -९९

या विनश्यति सा माया चिन्मात्रे परिकल्पिता ।
अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः ॥ १००

अधिष्ठानस्य नाशो न सत्यत्वादेव सर्वदा ।
सर्वाधिष्ठानमीशानं पश्यन्नेव विमुच्यते ॥ -१०१

ईशानविषयं ज्ञानं वेदान्तश्रवणादिना ।
जायते परहंसस्य यतेर्मुख्याधिकारिणः ॥ -१०२

अतः प्रत्यक्षपूर्वैस्तु प्रमाणैरखिलैरपि ।
प्रत्यक्भूतशिवो ज्ञातुं न शक्यस्सर्वजन्तुभिः ॥ -१०३

प्रत्यगात्मा शिवस्साक्षान्न परागर्थ आस्तिकाः ।
पराचीनस्य सर्वस्य ह्यनात्मत्वस्य दर्शनात् ॥ -१०४

आत्मा स्वभावतो बद्धो यदि स्याद्ब्रह्मवित्तमाः ।
नैव मुच्येत संसाराज्जन्मान्तरशतैरपि ॥ -१०५

आत्मभेदस्तथैवात्मब्रह्मभेदश्च सुव्रताः ।

उपाधिनैव क्रियते प्रतीयत इत्यर्थः ।

चेत्यरूपेण भेदस्तु चेत्यस्यैव न चात्मनः ॥ -१०६

भेदसाक्षी शिवोह्यात्मा कथं भिन्नो भवेद्द्विजाः ।

चैत्यरूपेण दृश्यरूपेण घटपटादिना ।

अत आत्मनि भेदस्तु भ्रान्तिसिद्धो न च स्वतः ॥ -१०७

एकस्य नभसो भेदः यथा भ्रान्त्या प्रतीयते ।
निरस्तश्चात्मभेदस्तु घटादीनां भिदापि च ॥ -१०८

भ्रान्तिसिद्धा न सत्योक्ता तर्कतश्च प्रमाणतः ।
"एकमेवाद्वितीयं स्यादित्याह" श्रुतिरादरात् ॥ -१०९

"मायामात्रमिदं द्वैतं" इति चाह परा श्रुतिः ।
"एकत्वं पश्यतो मोहश्शोकः" क इति चाह हि ॥ -११०

अतस्तत्प्रमाणाभ्यां वस्त्वेकत्वं सुनिश्चितम् ।
वस्त्वेकं च महावाक्यादेव जानन्ति ये जनाः ॥ -१११

ते मुच्यन्ते हि संसाराद्यथा स्वप्नात्प्रबोधतः ।
भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः ॥ -११२

ते महाघोरसंसारे पतन्त्येव न संशयः ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ -११३

सम्पश्यन्नात्मयाजी स्यात्स्वराज्यमधिगच्छति ।
द्वैतविज्ञानमासाद्य मुक्तिं वाञ्छन्ति ये नराः ॥ -११४

ते महाघोरसंसारे सर्पदष्टा न संशयः ।
ज्ञानयज्ञोडुपेनैव ब्राह्मणो वाऽन्त्यजोऽपि वा ॥ -११५

संसारसागरं तीर्त्वा मुक्तिपारं हि गच्छति ।
त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ॥ -११६

त्वमहंशब्दलक्ष्यार्थं असक्तं सर्वदोषतः ।
ज्ञाताज्ञातद्वयादन्यं ज्ञाताज्ञातस्य भासकम् ॥ -११७

प्रमाणभ्रान्तवृत्तीनामगम्यं तत्प्रकाशकम् ।
स्वयंभातं निराधारं ये न जानन्ति सुनिश्चितम् ॥ -११८

ते ह्यविज्ञानसम्पन्ना इति मे निश्चिता मतिः ।
उक्तलक्षणमात्मानं उक्तलक्षणमीश्वरम् ॥ -११९

एकं पश्यन्ति ये मर्त्यास्तर्कतश्च प्रमाणतः ।
तथा स्वानुभवेनैव गुरूक्त्या च प्रमाणतः ॥ -१२०

त एव ज्ञानसम्पन्नाः तीव्रश्शपथयाम्यहम् ।
स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ -१२१

न सन्ति नास्ति माया च तद्धि शुद्धात्मवेदितम् ।
प्रतीतमखिलं यस्य स्वात्मना भासते स्वयम् ॥ -१२२

संसारस्तस्य मुक्तिर्वा कथं सिद्ध्यति योगिनः ।
संसारो वा विमुक्तिर्वा यस्य भाति मुनीश्वराः ॥ -१२३

तस्यैव हि निषेधाश्च विधयश्च न योगिनः ।
आत्मविज्ञानिनो विप्रा लौकिको न हि वैदिकः ॥ -१२४

व्यवहारस्स्वतस्सर्वं स्वात्मना भाति केवलम् ।
स्वपूर्णात्मशिवानन्दप्रकाशबलतः पुमान् ॥ -१२५

स्वच्छन्दं वर्तते लोके को वा तस्य निवारकः ।
वस्तुतश्शम्भुरानन्दस्सत्यस्सम्पूर्णचिद्घनः ॥ -१२६

मायया मोहिता मर्त्यास्तं भेदेन विदुर्बुधाः ।
दासोऽहमिति सम्भ्रान्तिः तथा सोऽहमिति भ्रमः ॥ -१२७

अहं स इत्ययं मोहः तस्मादेतत्त्रयं त्यजेत् ।
निर्भेदे निर्मले नित्ये निराधारे निरञ्जने ॥ -१२८

दासस्सोऽहमहं सोऽपीत्यात्मन्येव कथं भवेत् ।
तस्मादज्ञानमायोत्थमिदं सर्वं जगद्बुधः ॥ -१२९

तद्विवेकप्रदीपेन शिवं पश्यन्विमुच्यते ।
विवेकालोकहस्तस्य ज्ञानमार्गेण गच्छतः ॥ -१३०

स्वात्ममुक्तिगृहप्राप्तिः सिद्ध्यत्येवाचिरेण तु ।
संसारदुःखतप्तानां आत्मज्ञानामृताम्भसा ॥ -१३१

तापशान्तिर्न चान्येन सत्यमेव न संशयः ।
स्वस्वरूपतया सर्वं वेद स्वानुभवेन यः ॥ -१३२

स धीरस्स तु विज्ञेयस्स शिवस्स सुदुर्लभः ।
सङ्कल्पलक्षणस्यास्य मनसस्साक्षिरूपिणः ॥ -१३३

चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मणा ।
निश्चयात्मकविज्ञानस्वरूपमपि साक्षिणम् ॥ -१३४

चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मणा ।

कर्मभिस्सकलैरपि लिप्यते
ब्रह्मवित्प्रवरस्तु न सर्वदा ।
पद्मपत्रमिवाद्भिरहो पर-
ब्रह्मवित्प्रवरस्य वैभवम् ॥ -१३५

सर्पादिभावेन विभासमाना
रज्जुर्न सर्पादिस्सदैव रज्जुः ।
तद्वत्प्रपञ्चात्मतया विभाति
शिवो न विश्वं स एव सत्यम् ॥ -१३६

अतः प्रपञ्चानुभवस्तदा खलु
स्वरूपबोधानुभवस्तदा खलु ।
इति प्रपश्यन्परिपूर्णवेदिनो
न बन्धमुक्तो न च बन्ध एव तु ॥ -१३७

विकल्परहितं तत्त्वं ज्ञानमानन्दमव्ययम् ।
ये पश्यन्ति विमुक्तास्ते जीवन्तोऽपि न संशयः ॥ -१३८

निर्विकल्पं परं तत्त्वं तर्कतो यस्य भासते ।
सोऽपि मुच्येत संसाराद्यथा स्वप्नप्रपञ्चतः ॥ -१३९

कर्तारं कर्म बध्नाति खलु वेदविदां वराः ।
ज्ञानिनो नैव कर्तृत्वं कर्तृत्वस्य हि साक्षिणः ॥ -१४०

कायिकं वाचिकं कर्म मानसं कर्म नान्यथा ।
तथा सति कथं कर्म भवेत्तत्साक्षिरूपिणः ॥ -१४१

घटवद्दृश्यभूतस्य शरीरस्य तु साक्षिणम ।
चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मणा ॥ -१४२

जाग्रत्स्वप्नसुषुप्त्याख्य अवस्थात्रयसाक्षिणम् ।
चिद्रूपमात्मना पश्यन्कथं बध्येत कर्मणा ॥ -१४३

सच्चिदानन्दसम्पूर्णलक्षणं तमसः परम् ।
ब्रह्मानन्दं सदा पश्यन्कथं बध्येत कर्मणा ॥ -१४४

अविक्रियमसङ्गं च परिशुद्धं सदोदितम् ।
आत्मानमात्मना पश्यन्कथं बध्येत कर्मणा ॥ -१४५

स्वस्मिन्नध्यस्तरूपस्य प्रपञ्चस्यास्य साक्षिणम ।
आत्मानमात्मना पश्यन्कथं बध्येत कर्मणा ॥ -१४६

अज्ञानजन्यकर्त्रादिकारकोत्पन्नकर्मणा ।
श्रुत्युत्पन्नात्मविज्ञानप्रदीपो बाध्येत कथम् ॥ -१४७

अज्ञानान्धतमोरूपं कर्मधर्मादिलक्षणम् ।
स्वयंप्रकाशमात्मानं नैव संस्प्रष्टुमर्हति ॥ -१४८

तस्माद्ब्रह्मात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ -१४९

अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ॥ -१५०

महापातकपूर्वाणां पातकानां मुनीश्वराः ।
रहस्यानां प्रसिद्धानां प्रायश्चित्तं तु वेदनम् ॥ -१५१

अपरोक्षात्मविज्ञानवतां नैवास्ति पातकम् ।
प्रायश्चित्तपरिज्ञानं परोक्षज्ञानिनां नृणाम् ॥ -१५२

तेषां निष्ठामविज्ञाय मनुष्याश्चर्मचक्षुषः ।
विलोक्य पातकैर्युक्तान्मन्यन्तेऽसत्यमात्मनः ॥ -१५३

यथा ब्रह्मात्मविज्ञानं पातकानां मुनीश्वराः ।
प्रायश्चित्तं मया प्रोक्तं तथैव ब्रह्मभावना ॥ -१५४

श्रुत्याचार्यप्रसादेन सर्वं ब्रह्मेति भावयन् ।
मुच्यते पातकैस्सर्वैः घटिकामात्रतो नरः ॥ -१५५

दिनार्धं सकलं ब्रह्म भावयन् गुरुपूर्वकम् ।
बुद्धिपूर्वकृतैस्सर्वैः पातकैर्मुच्यते नरः ॥ -१५६

विग्रहं परतत्त्वस्य त्रिणेत्रं साम्बमद्भुतम् ।
मुहूर्तं चिन्तयन्मर्त्यः मुच्यते सर्वपातकैः ॥ -१५७

स्वस्वरूपानुसन्धानान्नृत्यन्तं सर्वसाक्षिणम् ।
मुहूर्तं चिन्तयन्मर्त्यो मुच्यते सर्वपातकैः ॥ -१५८

अन्नपानादिभिर्भक्त्या ब्रह्मनिष्ठं समर्चयेत् ।
सर्वपापविनिर्मुक्तः शङ्करं याति मानवः ॥ -१५९

बहुनात्र किमुक्तेन सर्वं ब्रह्मात्मना पुनः ।
सर्वदोषनिवृत्यर्थं चिन्तयेत्सुदृढं सदा ॥ -१६०

ब्रह्मरूपेण सङ्ग्राह्यं सर्वं शुद्धं सदा भवेत् ।
नित्यशुद्धस्य दृष्टिस्तु विशुद्धयै भवति ध्रुवम् ॥ -१६१

नित्यशुद्धं हि तद्ब्रह्म सदा सत्यादिलक्षणम् ।
ततस्तद्दृष्टिसंयुक्तं विशुद्धं सकलं भवेत् ॥ -१६२

अभक्ष्यं ब्रह्मविज्ञानविहीनस्यैव देहिनः ।
न तु विज्ञानिनस्तस्य स्वरूपं सकलं खलु ॥ -१६३

अहमन्नं सदान्नादः इति हि ब्रह्मवेदनम् ।
ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ॥ -१६४

ब्रह्मक्षत्रादिकं सर्वं यस्य स्यादोदनं सदा ।
यस्योपसेचनं मृत्युः तद्ज्ञानी तादृशः खलु ॥ -१६५

स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भेदः पृथक्स्वतः ।
अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् ॥ -१६६

ब्रह्मविज्ञानसम्पन्नः प्रतीतमखिलं जगत् ।
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥ -१६७

तस्मादभक्ष्यं नैवास्ति विदुषः परयोगिनः ।
आत्मविज्ञानहीनानां स्वल्पैवाभक्ष्यमास्तिकाः ॥ -१६८

महापातकपूर्वैश्च पातकैरखिलैरपि ।
स्वस्वरूपापरिज्ञानात् बध्यन्ते खलु मानवाः ॥ -१६९

स्वस्वरूपपरिज्ञानात् कर्मभिर्न हि बध्यते ।
स्वस्वरूपं तु शुद्धं हि सततं सर्वदेहिनाम् ॥ -१७०

स्वस्वरूपं तु चिन्मात्रं सर्वदा सर्वदेहिनाम् ।
नैव देहादिसङ्घातो घटवद्दृष्टिगोचरः ॥ -१७१

अतस्सर्वस्य साक्ष्यस्य साक्षीभूतस्त्वयप्रभः ।
आत्मा साक्ष्यगतैर्धर्मैः कर्मभिर्न हि बध्यते ॥ -१७२

सर्वं साक्षिणमात्मानं वर्णाश्रमविवर्जितम् ।
ब्रह्मरूपतया पश्यन् मुच्यते भवबन्धनात् ॥ -१७३

ब्रह्मवैभवखण्डे एव उपरिभागे देवान्प्रति ब्रह्मा —

सर्वमेतदयं साक्षात्प्रज्ञानघनलक्षणः ।
प्रतिष्ठा सर्ववस्तूनां प्रज्ञैषा परमेश्वरी ॥ -१७४

प्रज्ञानमेव तद्ब्रह्म सत्यज्ञानादिलक्षणम् ।
एवं रूपपरिज्ञानादेव मर्त्योऽमृतो भवेत् ॥ -१७५

न कर्मणा न प्रजया न चान्येनापि केनचित् ।
ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानवः ॥ -१७६

प्रत्यगज्ञानविज्ञानमायाशक्तेस्तु साक्षिणम् ।
एकं ब्रह्म च सम्पश्यन् साक्षाद्ब्रह्मविदुत्तमः ॥ -१७७

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ॥ -१७८

एवं यस्तु विजानाति स्वगुरोरुपदेशतः ।
स साध्वसाधुकर्मभ्यां सदा न तपति प्रभुः ॥ -१७९

तप्यतापकरूपेण विभातमखिलं जगत् ।
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात् ॥ -१८०

अयमर्थो महान्यस्य स्वत एव प्रकाशितः ।
न तस्य वर्णा विद्यन्ते नाश्रमाश्च तथैव च ॥ -१८१

अयमर्थो महान्यस्य स्वत एव प्रकाशितः ।
न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च ॥ -१८२

एतमर्थं महान्तं यः प्राप्तः शम्भोः प्रसादतः ।
स शम्भुरेव नैवान्यः इति मे निश्चिता मतिः ॥ -१८३

एतमर्थं महान्तं यः प्राप्तः शम्भोः प्रसादतः ।
तस्याहं वैभवं वक्तुं न शक्तस्सत्यमीरितम् ॥ -१८४

परमाद्वैतविज्ञानी मयाराध्यस्सदैव तु ।
नारायणेन रुद्रेण तथा देवैर्विशेषतः ॥ -१८५

परमाद्वैतविज्ञानी यत्र यत्र स्थितस्सुरः ।
तत्र सन्निहिता मुक्तिः नात्र कार्या विचारणा ॥ -१८६

परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः ।
शुश्रूषा क्रियते येन तत्पादौ मम मस्तके ॥ -१८७

परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः ।
समं देवं न पश्यामि न हरिं न महेश्वरम् ॥ -१८८

परमाद्वैतविज्ञाननिष्ठाय परयोगिने ।
शरीरमर्थं प्राणांश्च प्रदद्याच्छ्रद्धया सह ॥ -१८९

परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः ।
शुश्रूषा शुद्धविद्यायास्साधनं हि न संशयः ॥ -१९०

स्वशरीरे स्वयंज्योतिस्स्वरूपं स्वकमैश्वरम् ।
क्षीणदोषाः प्रपश्यन्ति नेतरे माययावृताः ॥ -१९१

एवंरूपपरिज्ञानं यस्यास्ति परयोगिनः ।
कुत्रचिद्गमनं नास्ति तस्य सम्पूर्णरूपिणः ॥ -१९२

आकाशमेकं सम्पूर्णं कुत्रचिन्नैव गच्छति ।
तद्वत्स्वात्मविभुस्तज्ज्ञः कुत्रचिन्नैव गच्छति ॥ -१९३

प्रतीतमविशेषेण सकलं ब्रह्म यः पुमान् ।
वेद तं शिरसा नित्यं प्रणमामि जगद्गुरुम् ॥ -१९४

अविशेषेण सर्वं तु यः पश्यति महेश्वरम् ।
स एव साक्षाद्विज्ञानी स शिवस्स तु दुर्लभः ॥ -१९५

निष्ठा नाऽस्य महात्मनस्सुरवरा वक्तुं मया शक्यते
प्रौढेनापि शिवेन वा मुनिगणैर्नारायणेनापि वा ।
वेदेनापि पुरातनेन परया शक्त्या परेणाऽथवा
मूकीभावमुपैति तत्र विदुषां निष्ठा हि तादृग्विधा ॥ -१९६

अहो निर्वाणनिष्ठस्य योगिनः परमा गतिः ।
यादृशी परमा निष्ठा तादृश्येव हि केवलम् ॥ -१९७

ईदृशी परमा निष्ठा गुरोस्साक्षान्निरीक्षणात् ।
कर्मसाम्ये त्वनायासात् सिद्ध्यत्येव न संशयः ॥ -१९८

देशिकं देवदेवेशं शिवं विद्याद्विचक्षणः ।
तदिष्टं सर्वयत्नेन प्रकुर्यात्सर्वदादरात् ॥ -१९९

शिवे क्रुद्धे गुरुस्त्राता गुरौ क्रुद्धे न कश्चन ।
तस्मादिष्टं गुरोः कुर्यात् कायेन मनसा गिरा ॥ -२००

अनात्मरूपं देहादि यो ददाति पिता न सः ।
न गुरुः कथितः प्राज्ञैः क्लेशहेतुप्रदो हि सः ॥ -२०१

अष्टैश्वर्यप्रदस्तद्वत् गन्धर्वादिपदप्रदः ।
मन्त्रतन्त्रादिदस्तद्वत न गुरुः क्लेशदो हि सः ॥ -२०२

दृश्यरूपमिदं सर्वं दृग्रूपेण विलाप्य च ।
दृग्रूपं ब्रह्म यो वक्ति स गुरुर्नेतरः पुमान् ॥ -२०३

परमाद्वैतविज्ञानं कृपया वै ददाति यः ।
सोऽयं गुरुवरस्साक्षात् शिव एव न संशयः ॥ -२०४

ईदृशं देशिकं साक्षाद्वेदान्ताम्बुजभास्करम् ।
तोषयेत्सर्वयत्नेन श्रेयसे भूयसे नरः । २०५

वेदानामन्यथैवार्थं ये वदन्ति विमोहिताः ।
महासाहसिका एव ते नरा न संशयः ॥ -२०६

मदुक्तार्थप्रकारेण विना ये प्रवदन्ति ते ।
अन्धकूपे निरालम्बे पतन्त्येव न संशयः ॥ -२०७

वेदार्थः परमाद्वैतं नेतरत्सुरपुङ्गवाः ।
न चेदत्रैव मे मूर्धा पतिष्यति न संशयः ॥ -२०८

अन्यथा वेदवाक्यानां अर्थ इत्यतिशङ्कया ।
अनिश्चितार्थाश्चेन्मूर्धा युष्माकं च पतिष्यति ॥ २०९

तत्रैव मुनीन्प्रति सूतः -

भासमानमिदं सर्वं भानमेवेति वेद यः ।
स भानरूपं देवेशं याति नात्र विचारणा ॥ -२१०

प्रतीतमखिलं ब्रह्म तर्कतश्च प्रमाणतः ।
स्वानुभूत्या च यो वेद स एव परमार्थवित् ॥ -२११

जगद्रूपतया पश्यन्नपि नैव प्रपश्यति ।
अखिलं ब्रह्म संपश्यन् पश्यत्येव न संशयः ॥ -२१२

अप्रतीतं प्रतीतं च सदसच्च परश्शिवः ।
इति वेदान्तवाक्यानां निष्ठा काष्ठा सुदुर्लभा ॥ -२१३

सर्वमेतत्परं ब्रह्म पश्यन्मानबलेन तु ।
मुच्यते घोरसंसारात् सत्यमेव न संशयः ॥ -२१४

सर्वमेतत्परं ब्रह्म पश्यन्स्वानुभवेन तु ।
मुच्यते घोरसंसारात् सद्य एव न संशयः ॥ -२१५

सर्वमेतत्परं ब्रह्म विदित्वा सुदृढं बुधः ।
स्वात्मना केवलेनैव तिष्ठेन्मुच्येत बन्धनात् ॥ -२१६

भासमानमिदं सर्वं भानरूपं परं पदम् ।
पश्यन्वेदान्तमानेन सद्य एव विमुच्यते ॥ -२१७

एवमात्मानमद्वैतं परानन्दं प्रपश्यतः ।
जगदात्मतया भातमपि स्वात्मैव केवलम् ॥ -२१८

विदित्वैवं महायोगी जगद्भानेऽपि निश्चलः ।
यथाभातमिदं सर्वं अनुजानाति चात्मना ॥ -२१९

प्रकाशात्मतया साक्षात् स्थितिरेवास्य केवलम् ।
विद्यते नैव विज्ञानं नाज्ञानं न जगत्सदा ॥ -२२०

प्रकाशात्मतया साक्षात्स्थितिरित्यपि भाषणम् ।
अहं वदामि मोहेन तच्च तस्मिन्न विद्यते ॥ -२२१

तस्य निष्ठा मया वक्तुं विज्ञातुं च न शक्यते ।
श्रद्धामात्रेण यत्किञ्चित् जल्प्यते भ्रान्तचेतसा ॥ -२२२

चिन्मात्रं सर्वतस्सत्यं सम्पूर्णसुखमद्वयम् ।
साक्षाद् ब्रह्मैव नैवान्यदिति तत्त्वविदां स्थितिः ॥ -२२३

शास्त्रं सत्यं सदानन्दं सततं वस्तु केवलम् ।
शुद्धं ब्रह्मेति सश्रद्धं प्राहुर्वेदविदां वराः ॥ -२२४

प्रत्यगात्माऽयमद्वन्द्वः साक्षी सर्वस्य सर्वदा ।
सत्यज्ञानचिदानन्दलक्षणस्सर्वदाऽनघाः ॥ -२२५

अतोऽयं प्रत्यगात्मैव स्वानुभूत्यैकगोचरम् ।
शास्त्रसिद्धं परं ब्रह्म न परं परमार्थतः ॥ -२२६

एवं तत्त्वप्रमाणाभ्यामाचार्योक्त्या च मानवः ।
अविज्ञाय शिवात्मैक्यं संसारे पतति भ्रमात् ॥ -२२७

शास्त्राचार्योपदेशेन तर्कैश्शास्त्रानुसारिभिः ।
सर्वसाक्षितयात्मानं सम्यक् निश्चित्य संस्थितम् ॥ -२२८

स्वात्मनश्चान्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया बुद्ध्वा पुनस्स्वात्मानमद्वयम् ॥ -२२९

शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।
यो निर्भयं च चिन्मात्रे विलाप्याविकृते द्वये ॥ -२३०

विलापनं च चिन्मात्रं बुद्ध्वा केवलरूपतः ।
स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ॥ -२३१

ईदृशी परमा निष्ठा श्रौतस्वानुभवात्मिका ।
देशिकालोकनेनैव केवलेन हि सिद्ध्यति ॥ -२३२

देशिकालोकनं चैव प्रसादात्पारमेश्वरात् ।
सिद्ध्यत्ययत्नतः प्राज्ञाः सत्यमेव मयोदितम् ॥ -२३३

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
प्रसादादेव सर्वेषां सर्वसिद्धिर्महेशितुः ॥ -२३४

यदा शम्भुतया सर्वं विभाति स्वयमेव हि ।
तदा हि शाम्भवस्साक्षात्प्रसादः सत्यमीरितम् ॥ -२३५

शिवादन्यतया किञ्चिदपि भाति यदा द्विजाः ।
तदा न शाङ्करो बोधस्सञ्जात इति मे मतिः ॥ -२३६

शिवादन्यतया सर्वं प्रतीतमपि पण्डितः ।
तत्त्वदृष्ट्या शिवं सर्वं सुस्थिरं परिपश्यति ॥ -२३७

शिवाकारेण वा नित्यं प्रपञ्चाकारतोऽपि वा ।
जीवकारेण वा भातं यत्तद्ब्रह्मेति चिन्तयेत ॥ -२३८

शम्भुरेव सदा भाति सर्वाकारेण नापरः ।
इति विज्ञानसम्पन्नः शङ्करो ज्ञानिनां वरः ॥ -२३९

शम्भुरूपतया सर्वं यस्य भाति स्वभावतः ।
न तस्य वैदिकं किञ्चित्तान्त्रिकं वास्ति लौकिकम् ॥ -२४०

यथाभातस्वरूपेण शिवं सर्वं विचिन्तयेत् ।
योगी चरति लोकानां उपकाराय केवलम् ॥ -२४१

स्वस्वरूपातिरेकेण निषिद्धं विहितं तु वा ।
न पश्यति महायोगी किन्तु स्वात्मतया खलु ॥ -२४२

चण्डालगेहे विप्राणां गृहे वा परमार्थवित् ।
भक्ष्यभोज्यादिवैषम्यं न किञ्चिदपि पश्यति ॥ -२४३

यथेष्टं वर्तते योगी शिवं सर्वं विचिन्तयन् ।
तादृशो हि महायोगी को वा तस्य निवारकः ॥ -२४४

श्रुतौ भक्तिर्गुरौ भक्तिश्शिवे भक्तिश्च देहिनाम् ।
साधनं स्वात्मविद्यायाः कृत्यमेव मयोदितम् ॥ -२४५

नित्ययुक्तस्य संसारो भ्रान्तिसिद्धस्सदा खलु ।
तस्मात् ज्ञानेन नाशस्स्यात् संसारस्य, न कर्मणा ॥ -२४६

ज्ञानलाभाय वेदोक्तप्रकारेण समाहितः ।
महाकारुणिकं साक्षाद्गुरुमेव समाश्रयेत ॥ -२४७

वक्तव्यं सकलं प्रोक्तं मयातिश्रद्धया सह ।
अतः परं तु वक्तव्यं न पश्यामि मुनीश्वराः ॥ २४८

हरिः ओम् ॥

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कंचन निरवधिकानन्दनिर्भरं वन्दे ॥ -२४९

॥ इति श्रीसूतसंहितासारसङ्ग्रहस्समाप्तः ॥

## ॥ अथ पाद्मपुराणसारसङ्ग्रहः ॥

योगासने सुखासीनं विद्युत्पिङ्गजटाधरम् ।
कराङ्कुरितचिन्मुद्रं कंचिद्देशिकमाश्रये ॥ -१

विद्यामरन्दनिष्यन्दनन्दच्छिष्यमधुव्रतम् ।
श्रीमत्परशिवेन्द्रश्रीपादपद्ममुपास्महे ॥ -२

नत्वा व्यासमुनिं पाद्मपुराणे परजीवयोः ।
ऐक्यप्रकाशकस्सारसङ्ग्रहः क्रियते मया ॥ -३

कान्तावियोगेन विषण्णमिव स्थितं श्रीरामं प्रति अगस्त्यः —

किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम् ।
जडः किञ्चिन्न जानाति देहोऽसौ पाञ्चभौतिकः ॥ -४

निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः ।
आत्मा न जायते नैव म्रियते न च दुःखभाक् ॥ -५

सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः ।
तथापि चाक्षुषैर्दोषैर्न कदाचिद्विलिप्यते ॥ -६

सर्वभूतान्तरात्मापि तद्वद्दुःखैर्न लिप्यते ।
देहो हि मलपिण्डोऽयं मुक्तजीवो जडात्मकः ॥ -७

दह्यते वह्निना काष्ठैः शिवाद्यैर्भक्षितोऽपि वा ।
तथापि नैव जानाति, विरहे तस्य का व्यथा ॥ -८

नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
अमूर्तः पुरुषः पूर्णः द्रष्टा देही स जीवनः ॥ -९

या तन्वङ्गी मृदुर्बाला मलपिण्डादिका जडा ।
सा न पश्यति यत्किञ्चिन्न शृणोति न जिघ्रति ॥ -१०

चर्ममात्रं तनुस्तस्याः प्रोद्बुद्धस्व च राघव ।
या प्राणाधिकाऽसावेव हन्त ते स्याद्घृणास्पदम् ॥ -११

जायन्ते येऽधिभूतेभ्यः देहिनः पाञ्चभौतिकाः ।
आत्मा हि केवलं तेषु परिपूर्णस्सनातनः ॥ -१२

का कान्ता तत्र कः कान्तः सर्व एव सहोदरः ।
निर्मितायां गृहावल्यां तदवच्छिन्नतां गतम् ॥ -१३

नभस्तस्यां तु दग्धायां न किञ्चित्क्षतिमृच्छति ।
तद्वदात्मापि देहेषु परिपूर्णस्सनातनः ॥ -१४

हन्यमानेषु तेष्वेव स्वयं नैव विहन्यते ।
स्वस्वरूपं विदित्वैवं दुःखं त्यक्त्वा सुखी भव ॥ -१५

श्रीरामं प्रति स्वरूपं विशदयति श्रीशिवः —

निर्गुणो निष्क्रियस्साक्षी सच्चिदानन्दविग्रहः ।
परमात्मा परञ्ज्योतिरव्यक्तोऽव्यक्तकारणम् ॥ -१६

नित्यो विशुद्धस्सर्वात्मा निर्लेपोऽहं निरञ्जनः ।
सर्वधर्मविहीनश्च न ग्राह्यो मनसाऽपि च ॥ -१७

नाहं सर्वेन्द्रियग्राह्यः सर्वेषां ग्राहकोऽप्यहम् ।
ज्ञाताहं सर्वलोकस्य मम ज्ञाता न विद्यते ॥ -१८

दूरस्सर्वविकाराणां परिणामादकिञ्चन ।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥ -१९

आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ।
यस्तु सर्वाणि भूतानि मय्येवेदं प्रपश्यति ॥ -२०

तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः ।
अनाद्यविद्यया युक्तस्तथाप्येकोऽहमव्ययः ॥ -२१

अव्याकृतः ब्रह्मरूपः जगत्कर्ताहमीश्वरः ।
नानाविद्यासमायुक्तः जीवत्वेन वसाम्यहम् ॥ -२२

आत्मज्ञानेन नष्टेऽस्मिन्नाविद्यकशरीरके ।
आत्मस्वरूपेऽवस्थानं मुक्तिरित्यभिधीयते ॥ -२३

यस्तु शान्त्यादियुक्तस्सन् मामात्मत्वेन पश्यति ।
न जायते परञ्ज्योतिरद्वैत ब्रह्म केवलम् ॥ -२४

सत्यं ज्ञानमनन्तं च सानन्दं ब्रह्म केवलम् ।
सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥ -२५

सजातीयविजातीयपदार्थानामसम्भवात् ।
सत्यं रूपमिदं राम शुद्धं यदभिधीयते ॥ -२६

मय्येव दृश्यते सर्वं जगत्स्थावरजङ्गमम् ।
व्योम्नि गन्धर्वनगरं यथा दृष्टं न दृश्यते ॥ -२७

अनाद्यविद्यया सर्वं विश्वं मय्येव कल्प्यते ।
विवर्तते च मय्येव मय्येवेदं विलीयते ॥ -२८

मम स्वरूपज्ञानेन यदाऽविद्या प्रणश्यति ।
तदैक एव वर्तेऽहं मनोवाचामगोचरम् ॥ -२९

सदैव परमानन्दस्वप्रकाशचिदात्मकम् ।
न कालः पञ्च भूतानि न दिशो विदिशश्च न ॥ -३०

मदन्यं नास्ति यत्किञ्चित् तदा वर्तेऽहमेककः —

न सन्दृशे तिष्ठति मे स्वरूपं
न चक्षुषा पश्यति मां तु कश्चन ।
हृदा मनीषा मनसाऽभिक्लृप्तं
ये मां विदुस्तेऽप्यमृता भवन्ति ॥ -३१

श्रीरामः —

कथं हि भवतो ज्ञानं शुद्धं मर्त्यस्य जायते ।
तत्रोपायं हर ब्रूहि मयि वोऽनुग्रहो यदि ॥ -३२

श्रीशिवः —

विरज्य सर्वभूतेभ्यः आविरिञ्चिपदादपि ।
घृणां विपाट्य सर्वस्मिन्पुत्रमित्रादिकेष्वपि ॥ -३३

श्रद्धालुर्मुनिमार्गेषु वेदान्तज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ -३४

सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सदा वेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ -३५

सर्ववेदान्तवाक्यानां मयि तात्पर्यनिश्चयः ।
श्रवणं नाम तत्प्राहुः सर्वे ते ब्रह्मवादिनः ॥ -३६

श्रुतस्य लोहमण्यादिदृष्टान्तैर्यद्विचिन्तनम् ।
तदेव मननं प्राहुः वाक्यार्थस्योपबृंहणम् ॥ -३७

निर्ममो निरहङ्कारः सर्वसङ्गविवर्जितः ।
सदा शान्त्यादियुक्तस्सन् आत्मन्यात्मानमीक्षते ॥ -३८

यत्सदा ध्यानयोगेन तन्निदिध्यासनं मतम् ।
सर्वकर्मक्षयवशात् साक्षात्कारोऽपि चात्मनः ॥ -३९

कस्यचिज्जायते शीघ्रं चिरकालेन कस्यचित् ।
कूटस्थानीह कर्माणि कोटिजन्मार्जितान्यपि ॥ -४०

ज्ञानेनैव विनश्यन्ति न तु कर्मयुतैरपि ।
ज्ञानादूर्ध्वं तु यत्किञ्चित्पुण्यं वा पापमेव वा ॥ -४१

क्रियते बहु वाऽल्पं वा न तेनाऽयं विलिप्यते ।
शरीरारम्भकं यत्तु प्रारब्धकर्म तन्मतम् ॥ -४२

तद्भोगेनैव नष्टं स्यात् न तु ज्ञानेन नश्यति ।
निर्ममो निरहङ्कारो निर्लोभस्सङ्गवर्जितः ॥ -४३

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यः पश्यन्सञ्चरत्येषः जीवन्मुक्तोऽभिधीयते ॥ -४४

मोक्षस्य न हि वासोऽस्ति न ग्रामान्तरमेव वा ।
अज्ञानहृदयग्रन्थिनाशो मोक्ष इति स्मृतः ॥ -४५

आत्मा न जायते नित्यो म्रियतेऽसौ कथञ्चन ।
आत्मनो न विकारित्वं घटस्य नभसो यथा ॥ -४६

आत्मैवाहं परं ब्रह्म निर्लेपस्सुखनीरधीः ।
क्षुत्पिपासापराभूतः न तदश्नाति किञ्चन ॥ -४७

विश्वं शिवमयं वस्तु पश्यन्नात्मानमात्मना ।
तस्य क्षेत्रेषु तीर्थेषु किं कार्यं वास्तु कर्मसु ॥ -४८

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कञ्चन निरवधिकानन्दनिर्भरं वन्दे ॥ -४९

॥ इति पाद्मपुराणसारसङ्ग्रहस्समाप्तः ॥

## ॥ अथ मानवोपपुराणसारसङ्ग्रहः ॥

वीरासने समासीनं विद्युत्पिङ्गजटाधरम् ।
कराङ्कुरितचिन्मुद्रं कञ्चिद्देशिकमाश्रये ॥ -१

विद्यामरन्दनिष्यन्दनन्दच्छिष्यमधुव्रतम् ।
श्रीमत्परशिवेन्द्रश्रीपादपद्ममुपास्महे ॥ -२

केषाञ्चिदुपपूर्वाणां पुराणानां परमात्मनोः ।
ऐक्यप्रकाशकस्सारसङ्ग्रहः क्रियते मया ॥ -३

मानवोपपुराणे मुनीन्प्रति मनुः —

अथातस्संप्रवक्ष्यामि ज्ञानं ब्रह्मात्मगोचरम् ।
पुमान्यस्योदये नैव मुच्यते भवबन्धनात् ॥ -४

प्रत्यग्ब्रह्मैक्यरूपा या वृत्तिः पूर्णापिजायते ।
शब्दलक्षणसामग्र्या मानसी सुदृढा भृशम् ॥ -५

तस्यां च दृष्टिभूतस्तु प्रत्यगात्मा स्वयंप्रभः ।
स्वस्य स्वभावभूतेन ब्रह्मरूपेण केवलम् ॥ -६

स्वयं तस्यामभिव्यक्तस्तद्रूपेण मुनीश्वराः ।
ब्रह्मविद्यासमाख्या स्यात्तज्ज्ञानं चित्प्रकाशितम् ॥ -७

तद्रूपेणाभिव्यक्तिरूपेण –

प्रतीत्या केवलं सिद्धं दिवाभीतान्धकारवत् ।
अभूतं वस्तु गत्यैव स्वात्मना ग्रसते स्वयम् ॥ -८

दिवाभीतान्धकारवत् अहन्येवोलूककल्पिततमोवत् ।

स्वात्मन्यज्ञानतत्कार्यं प्रसन्नात्मा स्वयंबुधः ।
सम्पूर्णब्रह्मरूपेण स्वयमेवावशिष्यते ॥ -९

भूमानन्दं परं ब्रह्म स्वयमेव फलं महत् ।
पुरुषार्थतया तद्वद्वेदान्तैः प्रतिपाद्यते ॥ -१०

द्रष्टृरूपः प्रत्यगात्मा यो देहादिभ्यः पृथक्स्थितः ।
त्वमहंशब्दलक्ष्यार्थः सच्चिदानन्दलक्षणः ॥ -११

जाग्रत्स्वप्नसुषुप्तीनां साक्षिभूतस्स्वयंप्रभः ।
तस्यैव बोधकं वाक्यं अवान्तरमितीरितम् ॥ -१२

सच्चिदानन्दमद्वैतं यद्ब्रह्म ध्रुवमक्रियम् ।
तस्यैव बोधकं वाक्यमवान्तरमितीरितम् ॥ -१३

द्वयोर्वास्तवमेकत्वं महावाक्यमितीरितम् ।
तस्यैव बोधकं वाक्यं महावाक्यं न चेतरत् ॥ -१४

एवं रूपावभासस्तु स्वानुभूत्यैकगोचरः ।
येन सिद्ध्यति विप्रेन्द्राः तद्धि विज्ञानमैश्वरम् ॥ -१५

सर्वभूतसमात्मानं सत्तया स्वीयया तथा ।
स्वकीयेन प्रकाशेन स्वकीयेन सुखेन च ॥ -१६

स्वात्मन्यध्यस्तरूपेण सर्वभूतानि सत्तमाः ।
सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ -१७

इदं चेश्वरदृष्ट्योक्तं नैव शुद्धदृशा मया ।
शुद्धदृष्ट्या जगज्जीवमीश्वरः श्रुतयो गुरुः ॥ -१८

सुखदुःखात्मसंसारान्न मुक्तिस्संविदेव हि ।
संविन्मात्रमिदं सर्वं सुसूक्ष्मं परिपश्यताम् ॥ -१९

तज्ज्ञानं सूक्ष्मविज्ञानं दुर्लभं सर्वदेहिनाम् ।
केवलं सच्चिदानन्दस्वरूपोऽपि परस्तथा ॥ -२०

मायोपाधिवशेनैव जगतां कारणात्मना ।
स्थितस्सर्वेश्वरस्साक्षात् सर्वज्ञत्वादिधर्मवान् ॥ -२१

यस्तत्तं स्वक फणीवेदं जगत्सर्वं विजायते ।
एवमात्मानमद्वैतं ब्रह्मतत्त्वात्मनैव तु ॥ -२२

योगी जानाति, निष्ठैषा नापरा तस्य योगिनः ।
सर्वाधिष्ठानमद्वैतं परं ब्रह्म सनातनम् ॥ -२३

स एवात्मवतामात्मा साक्षी सर्वस्य सर्वदा ।
अनन्तानन्दसत्यार्थप्रकाशं परमं पदम् ॥ -२४

स्वात्मरूपेण सम्पश्यन् मुच्यते भवबन्धनात् ।
दृश्यरूपव्यतिरेकेण विभातं दृश्यमस्थिरम् ॥ -२५

दृश्यरूपात्मतया पश्यन्मुच्यते भवबन्धनात् ।
यथाभातस्वरूपेण यदा भात सदाखिलम् ॥ -२६

निस्सन्दिग्धमना भूत्वा निश्चलो निर्भयश्शिवम् ।
तर्कैतश्च प्रमाणैश्च स्वगुरोरुपदेशतः ॥ -२७

स्वानुभूत्या च सम्पश्यन् शिव एव भवेत्स्वयम् ।
पुरापि शिव एवायं शिवोऽद्यापि शिवोपरि ॥ -२८

संसारी वा विवेकेन विभाति न हि वस्तुतः ।
योगी विज्ञायतां निष्ठामसन्दिग्धमनास्सुखम् ॥ -२९

निस्स्पृहो निर्भयः पूर्णः निर्व्यापारश्च तिष्ठति ।
विसृज्य सर्वकर्माणि निर्भयो निरुपद्रवः ॥ -३०

आश्रयेदात्मविज्ञानं यदीच्छेत्परमां गतिम् ।
ज्ञानयज्ञस्य माहात्म्यं मया वक्तुं न शक्यते ॥ -३१

शिवेन विष्णुनाजेन श्रुत्या परमयापि च ।
ज्ञानयज्ञसमं नास्ति प्रायश्चित्तं न संशयः ॥ -३२

अतः पापनिवृत्यर्थं ज्ञानयज्ञं समाश्रयेत् ।
विज्ञानं परमं साक्षात्स्वोत्पत्या मुक्तिदं त्विह ।
अतस्तदेवोपपादेयं त्याज्यमन्यन्मुमुक्षुभिः ॥ -३३

॥ इति मानवोपपुराणसारसङ्ग्रहस्समाप्तः ॥

## ॥ अथ पराशरोपपुराणसारसङ्ग्रहः ॥

**

शुकं प्रति पराशरः --

सर्ववेदान्तसंसिद्धसाधनैस्सहि तस्य तु ।
जायते शुद्धविज्ञानं तेन मुक्तिर्न कर्मणा ॥ -१

वर्णाश्रमवयोवस्थाविशेषरहितात्मवित् ।
वर्तमानश्रुतेर्मूर्ध्नि न भवेद्वेदकिङ्करः ॥ -२

अतः परमविज्ञानं साधयेदप्रमादतः ।
ज्ञानार्थं नित्यकर्माणि प्रकुर्याद्ब्राह्मणोत्तमः ॥ -३

नित्यानुष्ठानतः क्षीणं महापापमथाऽस्य तु ।
चित्तशुद्धिर्भवेच्छुद्ध्या दोषदृष्टिश्च संसृतौ ॥ -४

संसारदोषदृष्ट्यैव विरक्तिर्जायते द्विज ।
विरक्तस्यैव संसारात्संसारस्यान्न संशयः ॥ -५

मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ।
सन्यसेन्नित्यकर्माणि मुमुक्षुः परहंसकः ॥ -६

मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद् ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥ -७

ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिस्सर्वैः साधनैस्सहितो भवेत् ॥ -८

अतस्सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैक्यगोचरा ।
या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः ॥ -९

तस्यां या चिदभिव्यक्तिः स्वतस्सिद्धा च शाङ्करी ।
तदेव ब्रह्मविज्ञानं तदेवाज्ञाननाशनम् ॥ -१०

आत्मानात्मविवेकाख्यप्रदीप्तादित्यसन्निधौ ।
कथं वर्णाभिमानाख्यं तमस्तिष्ठति सत्तम ॥ -११

सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वसाक्षिणम् ।
स्वात्मना पश्यतः कर्म कथं ब्रूहि शुभाशुभम् ॥ -१२

सर्वसाक्षिणमात्मानं सर्वबन्धविवर्जितम् ।
साक्षाद्ब्रह्मतया पश्यन्कथं बध्येत कर्मणा ॥ -१३

तस्माद्ब्रह्मात्मविज्ञानं ग्रसतेऽज्ञानमात्मनः ।
अज्ञानजनितं कर्म तत्फलं च न संशयः -१४

समूलं कर्म यद्ज्ञानं ग्रसते स्वयमेव तु ।
तदेव सर्वपापानां प्रायश्चित्तमनुत्तमम् ॥ -१५

प्रतिबन्धविनिर्मुक्तं परमं ब्रह्मवेदनम् ।
विना भयङ्करं पापं किं न नाशयति द्विज ॥ -१६

अतः परमविज्ञानमज्ञानं ग्रसते न तु ।
दृगात्मनाखिलं दृश्यं ग्रसतेऽज्ञानसम्भवम् ॥ -१७

अज्ञानमपि तत्कार्यं ग्रस्तमप्यात्मवेदनात् ।
प्रारब्धफलकर्मान्तं भाति चाभासमात्रतः ॥ -१८

यदाभासतया भाति जगद्दग्धमपि स्वतः ।
जीवन्मुक्तस्तदा विद्वान् न स भूयोऽपि जायते ॥ -१९

जीवन्मुक्तस्तदा भातमभातं चाखिलं जगत् ।
पश्यन्नपि पृथक्स्वस्मात् पश्यति स्वात्मनैव तु ॥ २०

तस्मात्सम्पूर्णविज्ञानं सर्वकर्मनिवर्तकम् ।
कारणाज्ञाननाशेन न कर्मप्रतिकृद्यतः ॥ -२१

प्रतिकृत् प्रतिबन्धकम् ।

अज्ञाने सति कर्तृत्वं तस्य कर्म शुभाशुभम् ।
तथा सति कथं कर्म बाधते ज्ञानमात्मनः ॥ -२२

मूलभूते स्थितेऽज्ञाने ततो द्वैतं विजायते ।
शोभनाऽशोभनाध्यासः तत्र पुंसः प्रजायते ॥ -२३

रागद्वेषौ च जायेते शोभनाऽशोभनभ्रमात् ।
प्रवर्तते पुनर्देही धर्माधर्मौ प्रवृत्तितः ॥ -२४

धर्माधर्मोपभोगाय शरीरी जायते वशः ।
एवं पुनः पुनः भ्राम्यन् चक्रवद्भ्राम्यते नरः ॥ -२५

सम्यक् ज्ञाने समुत्पन्ने तेनाऽज्ञानं निवर्तते ।
तन्निवृत्तौ च तन्मूलं समस्तं प्रविनश्यति ॥ -२६

अतस्संसारनाशाय ज्ञानमेकं समाश्रयेत् ।
ज्ञानादूर्ध्वं तु कर्मास्ति शुभं वाशुभमेव च ॥ -२७

वस्तु सत्यात्मनः किञ्चित्पृथङ्नास्त्येव योगिनः ।
तथाप्यस्तीव भातीव व्यवहारे प्रवर्तते ॥ -२८

स्वात्मनोऽन्यतया सर्वं पश्यन्नपि परात्मवित् ।
निर्भयस्स्वात्मना सर्वं पश्यति स्वानुभूतितः ॥ -२९

सर्वं मायामयं साक्षादात्मा सर्वावभासकः ।
इत्येवमभिजानाति यस्स ब्रह्मविदेव सः ॥ -३०

दृश्यरूपमिदं सर्वं दृग्रूपं यः प्रपश्यति ।
अकर्तृस्वात्मरूपेण स तु ब्रह्मविदुत्तमः ॥ -३१

दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम् ॥ -३२

दृश्यत इति दर्शनम्, दृश्यम् । अदर्शनमदृश्यम् । तदु-भियात्मकं प्रविलाप्य स्वयं केवलरूपतः, निष्प्रपञ्चदृगात्मना यः तिष्ठति, स तु दृग्रूपब्रह्मैवेत्यर्थः । दृग्व्यतिरेकेणाभावस्तत्राह --

दृश्यं जगदिदं सर्वं शुक्तिकारजतादिवत् ।
अज्ञानेनैव कस्मिंश्चित् कल्पितं नैव वस्तुतः ॥ -३३

कल्पितस्य समस्तस्य यदधिष्ठानमास्तिकः ।
तत्कल्पितपदार्थेन भिन्नलक्षणमेव हि ॥ -३४

तत् अधिष्ठानं ब्रह्म ।

सर्वसाक्षीस्वरूपस्य प्रागभावाद्यसम्भवात् ।
ब्रह्मनाशाद्यभावेन सदा सत्यं परं पदम् ॥ -३५

कल्पितस्य समस्तस्य भासकत्वात्परं पदम् ।
स्वयंप्रकाशचैतन्यं तद्धि सर्वावभासकम् ॥ -३६

सत्तया च प्रकाशेन प्रियेण च परं पदम् ।
इदं सर्वं जगद्व्याप्य शुक तिष्ठति हि स्थिरम् ॥ -३७

सत्ता ज्ञानं सुखं चापि स्वरूपं परवस्तुनः ।
धर्मा हि भेदशून्यत्वाद्वस्तुतो धर्मधर्मिणोः ॥ -३८

भिन्नयोर्धर्मधर्मित्वं खलु लोके प्रतीयते ।
नैव भेदस्तयोरस्ति भेदस्यैवानिरूपणात् ॥ -३९

**वस्तुनो भिन्नत्वेन सिद्धौ, भेदस्य सिद्धिः, तत्सिद्धौ तयोस्तत्वेन सिद्धिरित्यन्योन्याश्रयग्रस्तत्वेन भेदो निरूपयितुमशक्य इत्यर्थः ।**

तस्मात्सत्या चिदानन्दा गुणा न परवस्तुनः ।
स्वरूपमेव, भेदस्तु तस्य मायाविजृम्भितः ॥ -४०

आत्मा नाम जडस्यास्य प्रपञ्चस्यावभासकः ।
स्वयञ्ज्योतिस्सदानन्दः सत्यस्सम्पूर्णलक्षणः ॥ -४१

स्वभावादेव यस्साक्षी स एव परमश्शिवः ।
तदैक्यं हि परा मुक्तिः जीवसंज्ञस्य देहिनः ॥ -४२

जीवन्मुक्तस्य पुण्यं वा पापं वा नैव विद्यते ।
कर्तुरेव हि तत्सर्वं कर्तृता नात्मवेदिनः ॥ -४३

कर्तृताऽहङ्कृतेरेव कर्ताऽहमिति भासनात् ।
नात्मनोऽकर्तृरूपस्य साक्ष्येवात्मा स्वयम्प्रभः ॥ -४४

स्वात्मनोऽन्यतया भातं समस्तं स्वपनोपमम् ।
स्वात्ममात्रतया बुद्ध्वा स्वयमेवावशिष्यते ॥ -४५

**॥ इति पराशरोपपुराणसारसङ्ग्रहस्समाप्तः ॥**

## ॥ अथ साम्बोपपुराणसारसङ्ग्रहः ॥

**

अगस्त्यं प्रति पराशरः —

अस्ति कश्चिदनाद्यन्तः स्वभावादेव निर्मलः ।
अप्रमेयस्स्वयंभातः स्वविलक्षणवर्जितः ॥ १

स नास्तीति प्रतिज्ञातुं सर्वथा नैव शक्यते ।
यस्तद्वदति नास्तीति स एव हि नास्तिकः ॥ -२

व्यवहाराश्रयत्वेन सर्वदा यः प्रकाशते ।
स्वयमेव स एवात्मा स एव सकलं जगत् ॥ -३

अत एव स्वयंज्योतिस्स्वरूपा सर्वसाधिका ।
दृगवश्यं महाप्राज्ञैः अभ्युपेया न संशयः ॥ -४

सर्वस्य व्यवहारस्य स एव परमाश्रयः ।
स एवात्मा स एवाहं स एव सकलं जगत् ॥ -५

साक्षात्तद्विषयं ज्ञानं वेदान्तवचनादिना ।
जायते योग्यं शिष्यस्य प्रसादादीश्वरस्य तु ॥ -५

न कर्मणा न पुत्रेण न धनेन मुनीश्वर ।
सन्यासेन विना ज्ञानं यथावन्नैव जायते ॥ -७

तस्मात्स्वात्मापरिज्ञानजनितस्य भयस्य तु ।
निवर्तकं मम ज्ञानं साधयेदप्रमादतः ॥ -८

ज्ञानस्वरूपमेवाभिनीय दर्शयति —

प्रत्यगात्मा खलु ब्रह्मसमाख्यं त्वहमद्वयम् ।
अब्रह्मत्वं यतो दृष्टं पररूपस्य वस्तुनः ॥ -९

प्रत्यगात्मा शरीरस्य कारणस्याखिलस्य च ।
प्राणस्य जगतस्साक्षी न साक्ष्यं सर्वदा खलु ॥ -१०

अतः प्रत्यक्स्वयंज्योतिस्स्वरूपात्मैव केवलम् ।
ब्रह्मवस्तु स एवाहं स एव सकलं जगत् ॥ -११

ममाद्वितीयतां सम्यक् विदित्वाचार्यपूर्वकम् ।
विलाप्य वेदनं चापि प्रकाशाव्यभिचारतः ॥ -१२

प्रकाशात्मस्वरूपेण स्वयं तिष्ठति तत्त्ववित् ।
एवंरूपेण विज्ञानं वेदावेद नचान्यतः ॥ -१३

अतस्सर्वं परित्यज्य वेदमेकं समाश्रयेत् :
प्रत्यगात्मतया सम्यक् प्रकाशयति मामिह ॥ -१४

तत्त्वमस्यादिवाक्येन प्रत्यक्षं करबिल्ववत् ।
यः प्रत्यक्षतमस्साक्षात् स्वानुभूत्यैव केवलम् ॥ -१५

तं कथं प्रत्यगात्मानं परोक्षं वदति श्रुतिः ।
अपरोक्षतमं साक्षात्परोक्षं वक्ति चेच्छ्रुतिः ।
कथं मानं भवेद्ब्रूहि वदन्ति स्वार्थमन्यथा ॥ -१६

स्वाज्ञानादन्यसंसर्गादपि स्वात्मानमन्यथा ।
विजानन्राजपुत्रस्तु परेण प्रतिबोधितः ॥ -१७

अज्ञानमन्यथा ज्ञानमपि त्यक्त्वा स्वयं पुनः ।
अपरोक्षं यथा वेद स्वात्मानं क्षत्रियस्तथा ॥ -१८

ब्रह्मभूतस्स्वयं मोहाद्देहादन्याभिसङ्गमात् ।
संसारीवत्स्वमात्मानं विजानन्वेदवाक्यतः ॥ -१९

प्रतिबोधितमात्मानं ब्रह्मरूपतयैव तु ।
अपरोक्षं विजानाति विलाप्य ज्ञानमात्मनि ॥ -२०

अतश्च प्रत्यगात्मानमपरोक्षतमं बुधः ।
बोधयत्यपरोक्षं हि श्रुतिस्तत्त्वमसीति सा ॥ -२१

एकत्वमेव वाक्यार्थः साक्षाद्ब्रह्मात्मनोर्बुधः ।
नेतरत्सत्यमेवोक्तं सन्देहं त्यज सत्तम ॥ -२२

एकत्वं पश्यतस्साक्षात्संसारः प्रविणश्यति ।
श्रुतयस्स्मृतयस्सर्वाः तदर्थं प्रवदन्ति हि ॥ -२३

उक्तसाधनसम्पन्नो मुमुक्षुर्गुर्वनुग्रहात् ।
मत्प्रसादाच्च लब्ध्वैवं याति निर्वाणमद्वयम् ॥ -२४

नित्यं शुद्धं तु कैवल्यं वेदनोदयमात्रतः ।
प्रतिबन्धव्युदासेन स्वयमेव प्रकाशते ॥ -२५

॥ इति साम्बोपपुराणसारसङ्ग्रहः ॥

## ॥ अथ आदित्योपपुराणसारसङ्ग्रहः ॥



स्कन्दं प्रतीश्वरः —

योगात्सञ्जायते ज्ञानं योगो मय्येकचित्तता ।
ज्ञानस्वरूपमेव स्याच्चिद्रूपमजमव्ययम् ॥ -१

आनन्दमजरं शुद्धं अज्ञानेन तिरोहितम् ।
वेदान्तवाक्यबोधेन तच्चाज्ञानं निवर्तते ॥ -२

ज्ञानं नैवात्मनो धर्मः न गुणो वा कथञ्चन ।
ज्ञानस्वरूप एवात्मा नित्यस्सर्वगतश्शिवः ॥ -३

अहमात्मा समस्तानां भूतानां परमेश्वरः ।
एक एव पदार्थश्च कल्पितो मयि षण्मुख ॥ -४

अद्वैतमेकमपरमात्मानं ज्ञानविग्रहम् ।
नानात्मानं प्रपश्यन्ति मायया मोहिता जनाः ॥ -५

विज्ञानमेकमखिलं विश्वाकारमबुद्धयः ।
पश्यन्ति ज्ञानिनस्त्वेवमात्मरूपमिदं जगत् ॥ -६

अहमात्मा विशुद्धश्च स्फटिकोपलसन्निभः ।
उपाधिरहितश्शान्तः स्वयंज्योतिः प्रकाशते ॥ -७

आत्मन्येवाखिलं भाति शुक्तिकारजतं यथा ।
शुक्तिकात्वपरिज्ञानात्तन्नाशस्तद्वदात्मनि ॥ -८

कर्तृत्वं नैव भोक्तृत्वं आत्मनोऽस्ति कदाचन ।
अहङ्काराविवेकेन कर्तृत्वमिति निश्चितम् ॥ -९

आत्मनो नित्यमुक्तस्य निर्विभागस्य षण्मुख ।
नैवास्ति किञ्चित्कर्तव्यमित्याहुर्वेदवादिनः ॥ -१०

कर्तृत्वं करणं चैव नात्मनोऽस्ति हि तत्त्वतः ।
बाह्ये वाभ्यन्तरे पुत्र यत्र यत्र मनः क्षिपेत् ॥ -११

तत्र तत्रात्मनो रूपं आनन्दमनुभूयते ।
संस्थाप्य मयि चात्मानं परञ्ज्योतिषि निर्गुणे ॥ -१२

मुहूर्तं तिष्ठतस्तस्य साक्षादनुभवो भवेत् ।
सर्वज्ञः परिपूर्णश्च जरामरणवर्जितः ॥ -१३

मत्प्रसादाद्भवेद्योगी नान्यथा क्रौञ्चसूदन ।
यदा मनसि वैराग्यं जायते सर्ववस्तुषु ॥ -१४

तदैव सन्यसेद्विद्वान् अन्यथा पतितो भवेत् ।
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ॥ -१५

निर्भयो निर्ममो नित्यं निर्द्वन्द्वो निष्परिग्रहः ।
जीर्णकौपीनवासास्स्यान्मुण्डी नग्नोऽथवा भवेत् ॥ -१६

भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद्यतिः ।
एकान्नाशी भवेद्यस्तु कदाचिल्लम्पटो यतिः ॥ १७

निष्कृतिर्नैव तस्यास्ति धर्मशास्त्रेषु सर्वदा ।
आत्मानं चिन्तयेदेवमीशानं प्रभुमव्ययम् ॥ -१८

अनन्तं निर्गुणं शान्तं पुरुषं प्रकृतेः परम् ।
कारणं सर्वजगतामाधारं सर्वतोमुखम् ॥ -१९

चिद्रूपं शङ्करं शुद्धं आनन्दमजरं विभुम् ।
प्रेरकं सर्वभूतानामेकं ब्रह्म महेश्वरम् ॥ १२०

अप्रमेयमनाद्यन्तं स्वयञ्ज्योतिस्सनातनम् ।
तन्निष्ठस्तन्मयो भूत्वा योगयुक्तो महामुनिः ॥ -२१

अचिरेणैव कालेन याति ब्रह्म परं पदम् ।
दान्तस्सुसंयतो ध्यानी निराशो विगतस्पृहः ॥ -२२

सर्वसङ्गविहीनश्च निर्द्वन्द्वो निरुपप्लवः ।
सर्वसङ्गपरित्यागी जडान्धबधिराकृतिः ॥ -२३

मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ।
प्राज्ञो वेदान्तविद्योगी निर्ममो निरहङ्कृतिः ॥ -२४

एको ज्ञानी प्रशान्तात्मा स सन्तरति नेतरः ।
कूटस्थमचलं सूक्ष्मं नित्यं निर्गुणमव्ययम् ।
आनन्दमक्षरं ब्रह्म तात जानीहि तत्पदम् ॥ -२५

॥ इति आदित्योपपुराणसारसङ्ग्रहः ॥

## ॥ अथ वासिष्ठलैङ्गोपपुराणसारसङ्ग्रहः ॥

स्वरूपमाविष्करोति मुनीन्प्रति श्रीशिवः —

न चास्ति वर्णाश्रमता शरीरतो
न कर्तृता कर्मफलेषु भोक्तृता ।
न मे सदा कारयितृत्वकल्पना
न चास्ति शब्दादि जगन्मये मयि ॥ -१

न चास्ति माया मम वेदवित्तमाः
स्वयंप्रभस्सर्वजगद्विभासकः ।
असङ्गरूपोऽहमतीव निर्मलः
सुखैकविज्ञानघनस्स्वभावतः ॥ -२

यथैव दण्डादिषु सर्पकल्पना
यथैव शुक्तौ रजतादिविभ्रमः ।
तथैव मय्यर्पितमात्ममायया
समस्तदृश्यं जगदागमेरितम् ॥ -३

देहात्मबोधेन समस्तजन्तवः
कुर्वन्ति कर्माणि फलाभिलाषिणः ।
न मे शरीरात्ममतिस्स्वभावतः
ततो न कर्तव्यमिहास्ति किञ्चन ॥ -४

एकोऽहमासं प्रथमं मुनीन्द्राः
वर्तामि पश्चादभिसम्भवामि ।
अतो न मत्तः पृथगस्ति किञ्चित्
विचार्यमाणेऽप्यविचार्यमाणे ॥ -५

न मेऽस्ति पूर्वं न परं न चापरं
न बाह्यमप्येव सदा मुनीश्वराः ।
यथा हि सिन्धुर्निखनो रसात्मकः
तथैव विज्ञानघनोऽहमास्तिकाः ॥ -६

न सन्ति सङ्कल्पविकल्पबुद्धयः
न च प्रमाता प्रमितिः प्रमाणम् ।

प्रमेयजातं च सदा विचारतः
पृथङ्न मत्तः सुखभूमलक्षणात् ॥ -७

न चास्ति हेयं परमार्थतस्सदा
तथैव चादेयमपि द्विजोत्तमाः ।
अतो न साध्यं परमार्थतोऽस्ति मे
न साधनं चाविदुषामिव द्विजाः ॥ -८

युष्माकमात्माहमतो हि साक्षी
मत्तो न यूयं पृथगात्मभज्ञाः ।
तथापि भेदो जलपात्रभेदात्
दिवाकरस्येव शरीरभेदात् ॥ -९

एवं न जानन्ति न मां पृथक्जनाः
तथापि तेषामहमात्मरूपतः ।
पुरा विजानन्ति विशुद्धबुद्धयः
स्वरूपमाम्नायवचोभिरेव माम् ॥ -१०

मुनीश्वराः कर्म विहाय मोहजं
विशुद्धविज्ञानमवाप्य वाक्यजम् ।
विहाय वर्णाश्रमकल्पनामिमां
शरीरमाभासतया विचिन्त्यताम् ॥ -११

सुखेन वर्तध्वमविद्ययागतं
मनुष्यभावं च विहाय देहजम् ।
विहाय सङ्कल्पविकल्पवासनां
अनुग्रहेणाहमवोचमास्तिकाः ॥ -१२

॥ इति वासिष्ठलैङ्गोपपुराणसारसङ्ग्रहः ॥

॥ हरिः ओम् ॥ ॥ शुभमस्तु ॥

